# तत्त्वार्थाधिगमसूत्रम् ।

अर्हद्वचनैकदेशस्य संग्रहम् ।

श्रीमदुमास्वातिना रचितम् ।

स्वकृतभाष्यसहितम् ।

श्रीलश्री

बङ्गाल–एशियाटिक–सोसाइटी–नामकसमाजानुज्ञया

प्रेमचन्दतनुजेन केशवलालेन

परिशोधितम् ।

प्रथमो भागः ।

मूलं भाष्यं च ।

कलकत्ताराजधान्याम्

वाप्टिष्टमिशनयन्त्रे

सं

## Preface.

The following materials have been utilized in the edition of this work.

A :—Manuscript belonging to Yati Nânachandji, of Bombay. This manuscript is without date and is written on paper, 17 leaves with 15 lines of about 56 aksharas each. In appearance, it is rather a new manuscript and seems to be about 200 years old. It and Manuscript C are very similar. Both these manuscripts mark the number of Sûtras. These manuscripts contain only the Bhâshya with original text intermixed therewith.

B :—Manuscript belonging to Mâhâraja Dayâvimalji, of Devashâ's Pâdâ, Ahmedâbâd. This manuscript is written on paper 44 leaves with 15 lines of about 70 aksharas each. It is dated Samvat 1532 (1475 A.D.) This date appears in a paragraph which seems to be written after some years of the writing of the whole work. This and Manuscript K strikingly resemble each other. This and Manuscript K contain original text in the first four leaves which is a Digambara version of the text, and from the fifth leaf we have the Bhâshya with the original text intermixed as in Manuscripts A and C. Manuscript B is a very carelessly written manuscript.

C :—Manuscript belonging to Lohar's Pole Upâshraya in Ahmedâbâd. It is without date and appears to be a very old manuscript. It is a carefully written manuscript though the scribe appears to have omitted words at intervals with the intention of avoiding trouble. It is written on paper 29 leaves with 19 lines of 70 aksharas each.

D :—Manuscript belonging to the Government of Bombay being No. 1,162 of the year 1887-1890 of Dr. Bhandarkar's collections. This is a paper manuscript of 45 leaves, with 18 lines, of about 54 letters each. It is dated Saturday, 7th of Jeshta, Suda Samvat 1467 (1412 A.D.), and is written in Bhrugupura (Broach in the Bombay Presidency). The manuscript begins from fourth leaf. It is of the type of the manuscripts B and K. It is correct and best of the manuscripts seen by me. This manuscript, I presume, must have contained the Digambar version of the text in the first three leaves as it strikingly resembles manuscripts B and K. This manuscript did

not originally mark the number of Sûtras. It is very carefully revised and Sûtras are numbered afterwards besides containing a good पद्च्छेद । This manuscript was obtained by me through the kindness of the Philological Secretary of the Asiatic Society. Unfortunately I received it after first three forms were published.

H :—I have named the commentary of Haribhadrasuri H. I have seen three copies of this work. It was commenced by Haribhadrasuri and finished by the pupil of Yashobhadrasuri. A full description as well as the question of the priority of this commentary and that of Siddhesena will be given in the introduction.

K:—Manuscript K belonging to Mr. Shankerlal, of Kapadvanja, Kaira District. This manuscript contains Bhâshya up to 42 pages and then begins a commentary of Siddhasena extending up to 337 leaves. The manuscript was dated but someone has erased the date. It is a manuscript written in the fourteenth century. It is very beautifully written and is corrected in some places by someone. This is tolerably a good manuscript.

P—is a printed copy of the original text giving a Svetâmbara version of the text. Bhâshya is not published. P is printed by Tattvavivechakasabhâ at Pânjerâ Pole, Ahmedâbâd.

S :—I have called the commentary of Siddhasena S. I have two copies of it. As far as possible, I have checked the text with the commentary. The commentary is Bhâshyânusari, *i.e.*, follows Bhâshya. It is rather a commentary on the Bhâshya itself.

U :—This is the copy of the commentary of Siddhasena belonging to the Bhandâra of Sheth Umabhai Hathising of Ahmedabad.

Besides these manuscripts, I have occasionally referred to other copies of both the text and the commentary of Siddhesena.

My sincerest thanks are due to Maharaja Anandasâgarjî, who has been kind enough to look over my manuscript as well as some of the proofs, and who has practically put his whole library at my disposal; and to my brother Vakil Dahyabhai Premchand, who was the first to put the idea of editing such a work in my mind.

Lastly, it was only through the assistance and advice of Professor Hermann Jacobi that I was able to do this work. It was he who instructed me in the art of editing. He has been kind enough to supervise and revise my text and has read the final proof. My sincerest thanks are due to him.

I must pay my highest tribute of respect to the custodians of manuscripts who have kindly placed them at my disposal.

I shall be obliged if the oriental scholars be pleased to communicate to me the mistakes that might have crept in, so that I may be able to give an addenda in the next fasciculus.

HAZAPATEL'S POLE.
AHMEDABAD.
BOMBAY PRESIDENCY.
*26th April, 1903.*

K. P. MODY.

# ॥ तत्त्वार्थाधिगमसूत्रम् ॥

॥ ऐँ ॥

सम्यग्दर्शनशुद्धं यो ज्ञानं विरतिमेव चाप्नोति ।
दुःखनिमित्तमपीदं तेन सुलब्धं भवति जन्म ॥१॥
जन्मनि कर्मक्लेशैरनु[1]बद्धे ऽस्मिंस्तथा प्रयतितव्यम् ।
कर्मक्लेशाभावो यथा भवत्येष परमार्थः ॥२॥
परमार्थालाभे वा दोषे[2]ष्वारम्भकस्वभावेषु ।
कुशलानुबन्ध[3]मेव स्यादनवद्यं यथा[4] कर्म ॥३॥
कर्माहितमिह चामुत्र चाधमतमो नरः समारभते ।
इहफलमेव त्वधमो विमध्यमस्तूभयफलार्थम् ॥४॥
परलोकहितायैव प्रवर्तते मध्यमः क्रियासु सदा ।
मोक्षायैव तु घटते विशिष्टमतिरुत्तमः पुरुषः ॥५॥
यस्तु[5] कृतार्थो ऽप्युत्तम[6]-मवाप्य धर्मं परेभ्य उपदिशति ।
नित्यं स उत्तमेभ्यो ऽप्युत्तम इति पूज्यतम एव[7] ॥६॥
तस्मादर्हति पूजामर्हन्नेवोत्तमोत्तमो लोके ।
देवर्षिनरेन्द्रेभ्यः पूज्येभ्योऽप्यन्यसत्त्वानाम् ॥७॥

---

१ S सन्ततिवेष्टिते अनुबद्धे ।  २ S दोष = कषाय ।
३ S अनुबन्धं = प्रयोजनम् ।  ४ S तथा प्रवर्तितव्यम् यथा कुशलानुबन्धं कर्म स्यात् ।  ५ S तु = पुनः ।
६ S उत्तमं मोक्षफलमवाप्य कृतार्थो भवतीति ।  ७ S एवकारस्त्वार्थे ।

अभ्यर्चनादर्हतां* मनःप्रसादस्ततः समाधिश्च ।
तस्मादपि निःश्रेयसमतो हि तत्पूजनं न्याय्यम् ॥८॥
तीर्थप्रवर्तनफलं यत्प्रोक्तं† कर्म तीर्थकरनाम ।
तस्योदयात्कृतार्थोऽप्यर्हंस्तीर्थं प्रवर्तयति ॥९॥
तत्स्वाभाव्यादेव प्रकाशयति भास्करो यथा लोकम् ।
तीर्थप्रवर्तनाय प्रवर्तते तीर्थकर एवम् ॥१०॥
यः शुभकर्मासेवनभावितभावो भवेष्वनेकेषु ।
जज्ञे ज्ञातेक्ष्वाकुषु[१] सिद्धार्थनरेन्द्रकुलदीपः ॥११॥
ज्ञानैः पूर्वाधिगतैरप्रतिपतितैर्मतिश्रुतावधिभिः ।
त्रिभिरपि शुद्धैर्युक्तः शैत्यद्युतिकान्तिभिरिवेन्दुः ॥१२॥
शुभसारसत्त्व[२]संहननवीर्यमाहात्म्यरूपगुणयुक्तः ।
जगति महावीर इति त्रिदशैर्गुणतः कृताभिख्यः ॥१३॥
स्वयमेव बुद्धतत्त्वः सत्त्वहिताभ्युद्यता‡चलितसत्त्वः ।
अभिनन्दितशुभसत्त्वः सेन्द्रैर्लोकान्तिकैर्देवैः[३] ॥१४॥
जन्मजरामरणार्त्तं जगदशरणमभिसमीक्ष्य निःसारम् ।
स्फीतमपहाय राज्यं शमाय धीमान्प्रवव्राज ॥१५॥
प्रतिपद्याशुभशमनं निःश्रेयससाधकं श्रमणलिङ्गम् ।
कृतसामायिककर्मा व्रतानि विधिवत्समारोप्य ॥१६॥

* Pronounce अरिहतां metri causa. † A omits कर्म । ‡ K तो ऽ ।

१ S ज्ञाता नाम क्षत्रियविशेषाः तेषामपि विशेषसंज्ञा इक्ष्वाकवः ।
२ S सारं प्रधानमिति । सत्त्वमवैक्लव्यम् ।
३ S सलोकान्तिकैरिन्द्रैरिति प्राप्ते सेन्द्रैरित्युक्तम् ।

सम्यक्त्वज्ञानचारित्रसंवरतपःसमाधिबलयुक्तः ।
मोहादीनि निहत्याशुभानि चत्वारि कर्माणि ॥१७॥
केवलमधिगम्य विभुः स्वयमेव ज्ञानदर्शनमनन्तम् ।
लोकहिताय कृतार्थोऽपि देशयामास तीर्थमिदम् ॥१८॥
द्विविधमनेकद्वादशविधं महाविषयममितगमयुक्तम्[1] ।
संसारार्णवपारगमनाय दुःखक्षयायालम् ॥१९॥
ग्रन्थार्थवचनपटुभिः प्रयत्नवद्भिरपि वादिभिर्निपुणैः ।
[2]अनभिभवनीयमन्यैर्भास्कर इव सर्वतेजोभिः ॥२०॥
कृत्वा त्रिकरणशुद्धं तस्मै परमर्षये नमस्कारम् ।
पूज्यतमाय भगवते वीराय विलीनमोहाय ॥२१॥
तत्त्वार्थाधिगमाख्यं बह्वर्थं संग्रहं लघुग्रन्थम् ।
वक्ष्यामि शिष्यहितमिममर्हद्वचनैकदेशस्य ॥२२॥
महतोऽतिमहाविषयस्य दुर्गमग्रन्थभाष्यपारस्य ।
कः शक्तः प्रत्यासं[3] जिनवचनमहोदधेः कर्तुम्[4] ॥२३॥
शिरसा गिरिं बिभित्सेदुच्चिक्षिप्सेच्च स क्षितिं दोर्भ्याम् ।
प्रतितीर्षेच्च समुद्रं मित्सेच्च पुनः कुशाग्रेण[5] ॥२४॥
व्योम्नीन्दुं चिक्रमिषेन्मेरुगिरिं* पाणिना चिकम्पयिषेत् ।
गत्यानिलं जिगीषेच्चरमसमुद्रं पिपासेच्च ॥२५

* K व्योम्नि प्रतिचंक्रमिषेन्मे॰ ।

१ S गम = नय ॥  २ S अनभिभवनीयमिदं तीर्थं देशयामास ॥
३ H प्रत्यासं = सङ्ग्रहम् ॥  ४ S यश्चैतत्प्रधारयेदसाविदमप्यध्यवसेत् ॥
५ S तमेव समुद्रं परिमाणाधिगमाय कुशाग्रेण मातुमिच्छेत् ॥

खद्योतकप्रभाभिः सोऽभिबुभूषेच्च भास्करं मोहात् ।
योऽतिमहाग्रन्थार्थं जिनवचनं संजिघृक्षेत* ॥ २६ ॥
एकमपि तु जिनवचनाद्यस्मान्निर्वाहकं[1] पदं भवति ।
श्रूयन्ते चानन्ताः सामायिकमात्रपदसिद्धाः ॥ २७ ॥
तस्मात्त[2]त्प्रामाण्यात् समासतो व्यासतश्च जिनवचनम् ।
श्रेय इति निर्विचारं[3] ग्राह्यं धार्यं च वाच्यं च[4] ॥ २८ ॥
न भवति धर्मः श्रोतुः सर्वस्यैकान्ततो हितश्रवणात् ।
ब्रुवतोऽनुग्रहबुद्ध्या वक्तुस्त्वेकान्ततो भवति ॥ २९ ॥
श्रममविचिन्त्यात्मगतं तस्माच्छ्रेयः सदोपदेष्टव्यम् ।
आत्मानं च परं च हि हितोपदेष्टानुगृह्णाति ॥ ३० ॥
नर्ते च मोक्षमार्गाद्धितोपदेशोऽस्ति जगति कृत्स्नेऽस्मिन् ।
[5]तस्मात्परमिममेवेति मोक्षमार्गं प्रवक्ष्यामि ॥ ३१ ॥

॥ इति सम्बन्धकारिकाः समाप्ताः ॥[6]

---

* B संजिघृक्षेत् ।

---

१ S सुगृहीतमप्यभ्यस्यमानमुत्तरोत्तरज्ञानकारणत्वाद्भवोत्तारकमित्यर्थः ॥

२ S आगम । ३ निःशंकम् ।

४ ग्राह्यमध्ययनश्रवणाभ्यां धार्यमनुप्रेक्षणादिभिः वाच्यमर्थविचारणादिभिः ॥

५ S उक्तञ्च्म् । इमं हितोपदेशम ॥

६ At the end of the commentary on these Kārikās S has the following verse: इतीयं कारिकाटीका शास्त्रटीकाचिकीर्षुणा संदृब्धा देवगुप्तेन प्रीतिधर्मार्थिना सता ॥ Then he gives five verses as his introduction.

# तत्त्वार्थाधिगमसूत्रम् ।

## प्रथमोऽध्यायः ।

### सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः ॥ १ ॥

सम्यग्दर्शनं सम्यग्ज्ञानं सम्यक्चारित्रमित्येष* त्रिविधो मोक्षमार्गः । तं पुरस्ताल्लक्षणतो विधानतश्च विस्तरेणोपदेक्ष्यामः । शास्त्रानुपूर्वीविन्यासार्थं[1] तूद्देश†मात्रमिदमुच्यते । एतानि च[2] समस्तानि मोक्षसाधनानि । एकतराभावेऽप्यसाधनानी‡त्यतस्त्रयाणां ग्रहणम् । एषां च पूर्वलाभे भजनीयमुत्तरं । उत्तरलाभे तु नियतः पूर्वलाभः । तत्र सम्यगिति प्रशंसार्थो निपातः समञ्चतेर्वा[3] भावः§ दर्शनमिति । [4]दृशेर-

---

* B ०त्येव ।  † A & B तद्देश० ।

‡ K omits इति ।  § K भावे ।

---

१ S शास्त्रक्रमरचनार्थम् । अविशिष्टपदार्थाभिधानं उद्देशः ।

२ S च = हि ।

३ S व्युत्पत्तिपक्षेऽप्यर्थप्रदर्शनायाह समञ्चतेर्वा संपूर्वादञ्चतेस्साध्यमेतद्रूपमित्यर्थः...समञ्चति गच्छति व्याप्नोति सर्वान्द्रव्यभावानिति .सम्यग्....वा शब्दो विकल्पप्रदर्शनाय एतस्मिंश्च पक्षे किलाधिगमसम्यग्दर्शनं कथितम् ।

४ H भावो दर्शनं दृशेः । अय० ।

व्यभिचारिणी सर्वेन्द्रियानिन्द्रियार्थप्राप्तिरेतत्*सम्यग्दर्शनं । प्रशस्तं दर्शनं सम्यग्दर्शनं† । संगतं वा दर्शनं सम्यग्दर्शनम् । एवं ज्ञानचारित्रयोरपि‡ ॥

## तत्त्वार्थश्रद्धानं सम्यग्दर्शनम् ॥ २ ॥

तत्त्वानामर्थानां श्रद्धानं तत्त्वेन वार्थानां श्रद्धानं तत्त्वार्थश्रद्धानम् तत् सम्यग्दर्शनम्§ । तत्त्वेन भावतो निश्चितमित्यर्थः । तत्त्वानि जीवादीनि वक्ष्यन्ते‖ । त एव चार्थास्तेषां श्रद्धानं तेषु प्रत्ययावधारणम् । तदेवं¶ प्रशमसंवेगनिर्वेदानुकम्पास्तिक्याभिव्यक्तिलक्षणं[१] तत्त्वार्थश्रद्धानं सम्यग्दर्शनमिति ॥

## तन्निसर्गादधिगमाद्वा ॥ ३ ॥

तदेतत्सम्यग्दर्शनं द्विविधं भवति । निसर्गसम्यग्दर्शनमधिगमसम्यग्दर्शनं च । निसर्गादधिगमाद्वोत्पद्यत इति द्विहेतुकं द्विविधम् ॥ निसर्गः परिणामः स्वभावः अपरोपदेश** इत्यनर्थान्तरम् । ज्ञानदर्शनोपयोगलक्षणो जीव इति वक्ष्यते†† । तस्यानादौ संसारे परिभ्रमतः कर्मत एव कर्मणः स्वकृतस्य

---

* K तत् for एतत् ।
† K omits प्रशस्तं दर्शनं सम्यग्दर्शनं ।
‡ K omits अपि ।
§ B om. तत् सम्यग्दर्शनं ।
‖ I. 4.
¶ B om.
** A om. B स्वपरो॰ perhaps S omits this.
†† cf. II. 8.

---

१ लक्षणं = चिह्नं ।

बन्धनिकाचनोदयनिर्जरापेक्षं *नारकतिर्यग्योनिमनुष्यामरभवग्रहणेषु विविधं पुण्यपापफलमनुभवतो ज्ञानदर्शनोपयोगस्वाभाव्यात् तानि तानि परिणामाध्यवसायस्थानान्तराणि गच्छतोऽनादिमिथ्यादृष्टेरपि सतः परिणामविशेषादपूर्वकरणं तादृग्भवति येनास्यानुपदेशात्सम्यग्दर्शनमुत्पद्यत इत्येतन्निसर्गसम्यग्दर्शनम् ॥ अधिगमः अभिगमः आगमो निमित्तं श्रवणं शिक्षा उपदेश इत्यनर्थान्तरम्। तदेवं †परोपदेशाद्यत्तत्त्वार्थश्रद्धानं भवति तदधिगमसम्यग्दर्शनमिति ॥

अत्राह। तत्त्वार्थश्रद्धानं सम्यग्दर्शनमित्युक्तम्‡। तत्र किं तत्त्वम्§मिति। अत्रोच्यते।

## जीवाजीवास्रवबन्धसंवरनिर्जरामोक्षास्तत्त्वम् ॥ ४ ॥

जीवा अजीवा आस्रवा|| बन्धः संवरो निर्जरा मोक्ष इत्येष सप्तविधोऽर्थस्तत्त्वम्। एते वा सप्त पदार्थास्तत्त्वानि। तांल्लक्षणतो विधानतश्च पुरस्ताद्विस्तरेणोपदेक्ष्यामः ॥

## नामस्थापनाद्रव्यभावतस्तन्न्यासः ॥ ५ ॥

एभिर्नामादिभिश्चतुर्भिरनुयोग[१]द्वारैस्तेषां जीवादीनां तत्त्वानां न्यासो भवति। विस्तरेण लक्षणतो विधानतश्चाधि-

---

* K नरक।   † K puts यद् before परोपदे०।

‡ K तत्त्वं किमिति।   § I. 2.   || B आस्रवो।

---

१ S अनुयोगः सकलगणिपिटकार्थोऽभिधीयते ॥ तस्य द्वाराणि तस्यार्थस्याधिगमोपाया इत्यर्थः।

गमार्थं* न्यासो निक्षेप इत्यर्थः । तद्यथा । नामजीवः स्थापनाजीवो द्रव्यजीवो भावजीव इति । नाम संज्ञा कर्म इत्यनर्थान्तरम् । चेतनावतोऽचेतनस्य वा द्रव्यस्य जीव इति† नाम क्रियते । स नामजीवः ॥ यः काष्ठपुस्तचित्रकर्माक्षनिक्षेपादिषु स्थाप्यते जीव इति स स्थापनाजीवो देवताप्रतिकृतिवदिन्द्रो रुद्रः स्कन्दो विष्णुरिति ॥ द्रव्यजीव इति गुणपर्यायवियुक्तः प्रज्ञास्थापितोऽनादिपारिणामिकभावयुक्तो जीव‡ उच्यते । अथवा शून्योऽयं भङ्गः । यस्य ह्यजीवस्य सतो भव्यं जीवत्वं स्यात् स द्रव्यजीवः स्याद्§निष्टं चैतत् ॥ भावतो जीवा औपशमिकक्षायिकक्षायोपशमिकौदयिकपारिणामिकभावयुक्ता उपयोगलक्षणाः संसारिणो मुक्ताश्च द्विविधा वक्ष्यन्ते|| ॥ एवमजीवादिषु¶ सर्वेष्वनुगन्तव्यम् ॥

पर्यायान्तरेणापि नामद्रव्यं स्थापनाद्रव्यं द्रव्यद्रव्यं भावतोद्रव्यमिति । यस्य जीवस्य **वा जीवस्य वा नाम क्रियते द्रव्यमिति तन्नामद्रव्यम् । यत्काष्ठपुस्तचित्रकर्माक्षनिक्षेपादिषु स्थाप्यते द्रव्यमिति तत्††स्थापनाद्रव्यं देवताप्रतिकृतिवदिन्द्रो रुद्रः स्कन्दो विष्णुरिति । द्रव्यद्रव्यं नाम ‡‡गुणपर्यायवियुक्तं प्रज्ञास्थापितं धर्मादीनामन्यतमत् । केचिदप्याहुर्यद्द्रव्यतो द्रव्यं

---

* B अधिगमाय । † K adds यस्य । ‡ K द्रव्यजीव for जीव ।
§ K omits स्यात् । || II. 10. ¶ K adds अपि ।
** K omits वा । †† K omits तत् ।
‡‡ B adds सर्वं० । K adds स सदर्थं० ।

भवति* तच्च पुद्गलद्रव्यमेवेति प्रत्येतव्यम्। अणवः स्कन्धाश्च सङ्घातभेदेभ्य उत्पद्यन्ते† इति वक्ष्यामः। भावतो-द्रव्याणि धर्मादीनि सगुणपर्यायाणि‡ प्राप्तिलक्षणानि वक्ष्यन्ते। आगमतश्च प्राभृतज्ञो द्रव्यमिति भव्यमाह। द्रव्यं च भव्ये। भव्यमिति§ प्राप्यमाह। भू प्राप्तावात्मनेपदी||। तदेवं प्राप्यन्ते प्राप्नुवन्ति¶ वा द्रव्याणि॥ एवं सर्वेषामनादीनामादिमतां च जीवादीनां भावानां** मोक्षान्तानां†† तत्त्वाधिगमार्थं न्यासः कार्य इति॥

## प्रमाणनयैरधिगमः॥ ६॥

एषां च जीवादीनां तत्त्वानां यथोद्दिष्टानां‡‡ नामादिभिर्न्यस्तानां§§ प्रमाणनयैर्विस्तराधिगमो भवति॥ तत्र प्रमाणं द्विविधं परोक्षं प्रत्यक्षं च वक्ष्यते||||। चतुर्विधमित्येके। नयवादान्तरेण॥ नयाश्च¶¶ नैगमादयो वक्ष्यन्ते***॥

किं चान्यत्।

## निर्देशस्वामित्वसाधनाधिकरणस्थितिविधानतः॥ ७॥

---

* K भवतीति।   † V. 25, 26.   ‡ cf. V. 38.

§ K adds च।   || K पदीति।   ¶ K adds इति।

** H K omit भावानां।   †† S omits this.   ‡‡ K यथोपदिष्टानां।

§§ MSS have न्यस्तानामित्यधिगमोपायार्थमुपक्षिप्तानामित्यर्थः। H considers this to be the part of the text.   |||| I. 10 11

¶¶ H K adds पञ्च।   *** I. 35.

एभिश्च निर्देशादिभिः षड्भिरनुयोगद्वारैः सर्वेषां भावानां जीवादीनां तत्त्वानां विकल्पशो विस्तरेणाधिगमो भवति। तद्यथा। **निर्देशः**[1]। को जीवः। औपशमिकादिभावयुक्तो द्रव्यं जीवः।

सम्यग्दर्शनपरीक्षायां। किं सम्यग्दर्शनं द्रव्यं। सम्यग्दृष्टि-जीवो*ऽरूपी नो स्कन्धो नो ग्रामः॥ **स्वामित्वं**। कस्य सम्यग्दर्शनमित्येतदात्मसंयोगेन परसंयोगेनोभयसंयोगेन चेति वाच्यम्। आत्मसंयोगेन जीवस्य सम्यग्दर्शनम्। परसंयोगेन जीवस्याजीवस्य जीवयोरजीवयोर्जीवानामजीवानामिति विकल्पाः†। उभयसंयोगेन‡ जीवस्य§ नोजीवस्य जीवयोरजीवयोर्जीवानामजीवानामिति|| विकल्पा न सन्ति शेषाः[2] सन्ति॥ **साधनं**। सम्यग्दर्शनं केन भवति। निसर्गादधिगमाद्वा

---

* H K °ष्टिर्जीवो। † K om. ‡ K adds च।

§ C जीवस्य नोजीवयोरजीवस्य जीवयो जीवानां, B जीवस्य नोजीवस्य जीवयोः नोजीवयोः जीवानाम्।

|| K जीवयोर्नोजीवयोर्जीवानां नोजीवानामिति।

---

१ S निश्चयेनोपयुज्यते प्रस्तुते वस्तुनि स निर्देशः।

२ S जीवस्य जीवस्य। जीवस्य जीवयोः। जीवस्य जीवानाम्। जीवस्याजीवस्य। जीवस्याजीवयोः। जीवस्याजीवानाम्। षडित्यर्थः। K gives these as part of भाष्य and adds एते च विकल्पा क्वचिद् भाष्ये न दृश्यन्ते॥

भवतीत्युक्तम्* । तत्र निसर्गः पूर्वोक्तः । अधिगमस्तु सम्यग्व्यायामः[१] । उभयमपि तदावरणीयस्य कर्मणः क्षयेणोपशमेन क्षयोपशमाभ्यामिति ॥ अधिकरणं त्रिविधं आत्मसन्निधानेन परसन्निधानेनोभयसन्निधानेनेति वाच्यम्† । आत्मसन्निधानमभ्यन्तरसन्निधानमित्यर्थः । परसन्निधानं बाह्यसन्निधानमित्यर्थः । उभयसन्निधानं बाह्याभ्यन्तरसन्निधानमित्यर्थः‡ । कस्मिन्सम्यग्दर्शनं । आत्मसन्निधाने तावत्§ जीवे सम्यग्दर्शनं जीवे ज्ञानं जीवे चारित्रमित्येतदादि । बाह्यसन्निधाने|| जीवे सम्यग्दर्शनं नोजीवे¶ सम्यग्दर्शनमिति यथोक्ता विकल्पाः । उभयसन्निधाने **चाप्यभूताः सद्भूताश्च†† यथोक्ता भङ्गविकल्पा इति‡‡ ॥ स्थितिः । सम्यग्दर्शनं कियन्तं कालम् । सम्यग्दृष्टिर्द्विविधा । सादिः सपर्यवसाना सादिरपर्यवसाना च । सादि सपर्यवसानमेव च§§ सम्यग्दर्शनम् । तज्जघन्येनान्तर्मुहूर्तं उत्कृष्टेन|||| षट्षष्टिः सागरोपमानि साधिकानि । सम्यग्दृष्टिः सादिरपर्यवसाना । सयोगः शैलेशीप्राप्तस्य केवली सिद्धस्येति ॥

---

* I. 3.　† K om.　‡ C & S om.
§ B भवेत् ।　|| K बाह्यसन्निधानेन ।　¶ K नोजीवस्य ।
** K ०धानेनाप्य० ।　†† K भूताश्च ।　‡‡ K om.
§§ K तु for च ।　|||| K adds तु ।

---

१ S गुर्वादिसमीपाध्यासिनः शुभा या क्रिया सम्यग्दर्शनोत्पादने या प्रशस्ता सा सम्यग्व्यायाम इत्युच्यते ।

विधानं हेतुत्रैविध्यात्* †क्षयादित्रिविधं‡ सम्यग्दर्शनम् । तदावरणीयस्य कर्मणो दर्शनमोहस्य च क्षयादिभ्यः । तद्यथा । क्षयसम्यग्दर्शनं उपशमसम्यग्दर्शनं क्षयोपशमसम्यग्दर्शनमिति । अत्र चौपशमिकक्षायौपशमिकक्षायिकाणां परतः परतो विशुद्धिप्रकर्षः ॥

किं चान्यत् ।

**सत्संख्याक्षेत्रस्पर्शनकालान्तरभावाल्पबहुत्वैश्च ॥ ८ ॥**

सत् संख्या क्षेत्रं स्पर्शनं कालः अन्तरं भावः अल्पबहुत्वमित्येतैश्च सद्भूत[१]पदप्ररूपणादिभिरष्टाभिरनुयोगद्वारैः सर्वभावानां§ विकल्पशो विस्तराधिगमो भवति । कथमिति चेदुच्यते । **सत्** सम्यग्दर्शनं किमस्ति ||नास्त्यस्तीत्युच्यते । क्वास्तीति चेदु¶च्यते । अजीवेषु तावन्नास्ति** । जीवेषु तु†† भाज्यम्‡‡ । तद्यथा । गतीन्द्रियकाययोगकषायवेदलेश्यासम्यक्त्वज्ञानदर्शनचारित्राहारोपयोगेषु त्रयोदशस्वनुयोगद्वारेषु यथासम्भवं सद्भूत§§प्ररूपणा कर्तव्या ॥ **संख्या** । कियत्सम्यग्दर्शनं किं संख्येयमसंख्येयमनन्तमिति । उच्यते । असंख्येयानि

* H K हेतुत्रैविध्यात्तु त्रिविधम् । † K adds त्रिविधम् । ‡ K om.
§ K adds तत्त्वानां । || B नास्तीति अस्तीत्युच्यते ।
¶ K omits चेद् । ** K नास्तीति †† K omits तु ।
‡‡ K भजनीयम् । §§ K adds सद्भूतपदप्ररू० ।

१ S सद्भूत = विद्यमानार्थ ।

सम्यग्दर्शनानि। सम्यग्दृष्टयस्त्वनन्ताः॥ **क्षेत्रम्**। सम्यग्दर्शनं कियति क्षेत्रे। लोकस्यासंख्येयभागे॥ **स्पर्शनम्**। सम्यग्दर्शनेन किं स्पृष्टम्। लोकस्यासंख्येयभागः*। सम्यग्दृष्टिना तु सर्वलोक इति॥ अत्राह सम्यग्दृष्टिसम्यग्दर्शनयोः कः प्रतिविशेष इति। †उच्यते। अपायसद्द्रव्यतया सम्यग्दर्शनमपाय आभिनिबोधिकम्। तद्योगात्सम्यग्दर्शनम्। तत्केवलिनो नास्ति। तस्मान्न केवली सम्यग्दर्शनी सम्यग्दृष्टिस्तु‡॥ **कालः**। सम्यग्दर्शनं कियन्तं कालमि§त्यत्रोच्यते। तदेकजीवेन नानाजीवैश्च परीक्ष्यम्। तद्यथा। एकजीवं प्रति जघन्येनान्तर्मुहूर्तं उत्कृष्टेन षट्षष्टिः सागरोपमानि साधिकानि। नानाजीवान् प्रति सर्वाद्धा[१]॥ **अन्तरम्**। सम्यग्दर्शनस्य को विरहकालः। एकं जीवं|| प्रति जघन्येनान्तर्मुहूर्तं उत्कृष्टेन उपार्धपुद्गलपरिवर्तः। नानाजीवान् प्रति नास्त्यन्तरम्॥ **भावः**। सम्यग्दर्शनमौपशमिकादीनां भावानां कतमो भाव उच्यते। औदयिकपारिणामिकवर्जं त्रिषु भावेषु भवति॥ **अल्पबहुत्वम्**। अत्राह सम्यग्दर्शनानां त्रिषु भावेषु वर्तमानानां किं तुल्यसंख्य¶त्वमाहोस्विदल्पबहुत्वमस्तीति। उच्यते**। सर्वस्तोकमौपशमिकम्। ततः क्षायिकमसंख्येयगुणम्। ततोऽपि क्षायौपशमिकमसंख्येयगुणम्।

---

* C adds अष्टौ चतुर्दशभागा देशोनाः।
† H K अत्रोच्यते।
‡ C adds भवति।
§ K कालमुच्यते।
|| K एकजीवं।
¶ K तुल्यसंख्यात्वं।
** K adds भाव before उच्यते।

---

१ सर्वकालम्।

सम्यग्दृष्टयस्त्वनन्तगुणा इति ॥ एवं सर्वभावानां नामादिभिर्न्यासं कृत्वा प्रमाणादिभिरभिगमः* कार्यः ॥

उक्तं सम्यग्दर्शनम् । ज्ञानं वक्ष्यामः ।

## मतिश्रुतावधिमनःपर्यायकेवलानि ज्ञानम् ॥ ९ ॥

मतिज्ञानं श्रुतज्ञानं अवधिज्ञानं मनःपर्यायज्ञानं केवलज्ञानमित्येतन्मूलविधानतः पञ्चविधं ज्ञानम् । प्रभेदास्त्वस्य[१] पुरस्ताद्वक्ष्यन्ते† ॥

## तत्प्रमाणे ॥ १० ॥

तदेतत्पञ्चविधमपि ज्ञानं द्वे प्रमाणे भवतः परोक्षं प्रत्यक्षं च ॥

## आद्ये परोक्षम् ॥ ११ ॥

आदौ भवमाद्यम् । आद्ये सूत्रक्रमप्रामाण्यात् प्रथमद्वितीये शास्ति[२] । तदेवमाद्ये मतिज्ञानश्रुतज्ञाने परोक्षं प्रमाणं भवतः । कुतः । निमित्तापेक्षत्वात् । [३]अपायसद्द्रव्यतया मतिज्ञानम् ।

* H K ॰रधिगमः । † K adds तत्र ।

१ S मतिज्ञानस्यावग्रहादयः श्रुतस्यांगानंगप्रविष्टादयोऽवधिज्ञानस्य भवप्रत्ययादयो मनःपर्यायज्ञानस्य ऋजुमत्यादयः केवलज्ञानस्य तु न सन्त्येव ।

२ S शास्तीति च ग्रन्थकार एव द्विधात्मानं विभज्य सूत्रभाष्यकाराकारेणैवमाह शास्तीति सूत्रकार इति ।

३ S अपायश्च सद्द्रव्याणि च तेषां भावः तया । सद्द्रव्यतयेत्यनेनार्थत इदं कथ्यते सम्यग्दृष्टेर्योऽपायांश इति ।

तदिन्द्रियानिन्द्रियनिमित्तमिति* वक्ष्यते ॥ तत्पूर्वकत्वात्परोपदेशजत्वाच्च श्रुतज्ञानम् ॥

## प्रत्यक्षमन्यत् ॥ १२ ॥

मतिश्रुताभ्यां यदन्यत् त्रिविधं ज्ञानं तत्प्रत्यक्षं प्रमाणं भवति। कुतः। अतीन्द्रियत्वात्। प्रमीयन्तेऽर्थास्तैरिति प्रमाणानि[१] ॥ अत्राह। इह अवधारितं द्वे एव प्रमाणे प्रत्यक्षपरोक्षे इति। अनुमानोपमानागमार्थापत्तिसम्भवाभावानपि च प्रमाणानीति केचिन्मन्यन्ते। †तत्कथमेतदिति। अत्रोच्यते। सर्वाण्येतानि मतिश्रुतयोरन्तर्भूतानीन्द्रि[२]यार्थसन्निकर्षनिमित्तत्वात्। किं चान्यत्। अप्रमाणान्येव वा। कुतः। मिथ्यादर्शनपरिग्रहाद्विपरीतोपदेशाच्च। मिथ्यादृष्टेर्हि मतिश्रुतावधयो नियतमज्ञानमेवेति वक्ष्यते‡। [३]नयवादान्तरेण

* I. 14. † K omits तत्। ‡ I. 32.

१ S बहुवचनं व्यक्तिपक्षसमाश्रयणादिति।

२ S इन्द्रियाणि चक्षुरादीनि तेषामर्था रूपादयः इन्द्रियाणि चार्थाश्च इन्द्रियार्थाः तेषां सन्निकर्षः संबन्धः। स निमित्तं यस्य अनुमानादेस्तत्।

३ S यस्मान्मिथ्यादृष्टेरज्ञानं वक्ष्यते यद्येवं कथं तर्हि मतिश्रुतयोरन्तर्भूतानीत्युक्तमुच्यते। नयवादमाश्रित्यैतदुक्तं। ...... नयानां वादः स्वरुचितार्थप्रकाशनं तस्यान्तरं भेदो तेनैवम्। यथा मतिश्रुतयोर्विकल्पा भेदास्तेभ्यो जायन्त इति मतिश्रुतविकल्पजानि भवन्ति यथा तथा परस्तान्नयविचारणायां वक्ष्याम इति शब्दनयस्य हि मिथ्यादृष्टिरज्ञो वा नास्तीति वक्ष्यते तन्मतेन तु प्रमाणानीति।

तु यथा मतिश्रुतविकल्पजानि भवन्ति तथा परस्ताद्वक्ष्यामः* ॥

अत्राह । उक्तं भवता† मत्यादीनि ज्ञानानि उद्दिश्य तानि विधानतो लक्षणतश्च परस्ताद्विस्तरेण वक्ष्याम इति । तदुच्यतामिति । अत्रोच्यते ।

**मतिः स्मृतिः संज्ञा चिन्ताभिनिबोध इत्यनर्थान्तरम् ॥ १३ ॥**

मतिज्ञानं स्मृतिज्ञानं संज्ञाज्ञानं चिन्ताज्ञानं आभिनिबोधिकज्ञानमित्यनर्थान्तरम् ॥

**तदिन्द्रियानिन्द्रियनिमित्तम् ॥ १४ ॥**

तदेतन्मतिज्ञानं द्विविधं भवति । इन्द्रियनिमित्तमनिन्द्रियनिमित्तं च[1] । तत्रेन्द्रियनिमित्तं स्पर्शनादीनां पञ्चानां स्पर्शादिषु पञ्चस्वेव स्वविषयेषु । अनिन्द्रियनिमित्तं मनोवृत्तिरोघ[2]ज्ञानं च ।

**अवग्रहेहापायधारणाः ॥ १५ ॥**

तदेतन्मतिज्ञानमुभयनिमित्तमप्येकशश्चतुर्विधं भवति ।

* I. 35. † I. 9. p. 14. Line. 7.

१ S च शब्दात् क्षयोपशमनिमित्तमिति । स क्षयोपशमस्सर्वसाधारण इति कृत्वा न पठितश्च शब्देन वा संगृहीतः ।

२ S ओघ = सामान्यं अप्रविभक्तरूपम् ।

तद्यथा* । अवग्रह ईहापायो धारणा चेति । तत्राव्यक्तं[१] यथास्वमिन्द्रियैर्विषयाणामालोचनावधारणमवग्रहः । अवग्रहो ग्रहणमालोचनमवधारणमित्यनर्थान्तरम् ॥ अवगृहीते विषयार्थैकदेशाच्छेषानुगमनं निश्चयविशेषजिज्ञासा[२]† ईहा । ईहा ‡ऊहा तर्कः परीक्षा विचारणा जिज्ञासेत्यनर्थान्तरम् ॥ अवगृहीते विषये सम्यगसम्यगिति गुणदोषविचारणाध्यवसायापनोदोऽपायः । अपायोऽपगमः अपनोदः अपव्याधः अपेत§मपगतमपविद्धमपनुत्तमित्यनर्थान्तरम् ॥ [३]धारणा प्रतिपत्तिर्यथास्वं मत्यवस्थानमवधारणं च । धारणा प्रतिपत्तिरवधारणमवस्थानं निश्चयोऽवगमः अवबोध इत्यनर्थान्तरम् ॥

**बहुबहुविधक्षिप्रानिश्रितानुक्तध्रुवाणां सेतराणाम्||॥ १६ ॥**

अवग्रहादयश्चत्वारो मतिज्ञानविभागा एषां बह्वादीनामर्थानां सेतराणां भवन्त्येकशः । सेतराणामिति सप्रतिपक्षाणामि-

* K यथा only. S perhaps omits. † K, H add चेष्टा ।

‡ S perhaps adds चेष्टा ।

§ K omits these three, and has अपनुन्न for अपनुत्त ।

|| Var. S ॰निश्रितानिश्रितध्रुवाणाम् ।

१ S तत्रेति चतुर्ष्ववग्रहादिषु प्रक्रान्तेषु ।

२ H जिज्ञासया चेष्टा बोधस्तत्त्वात्मव्यापाररूपा ईहोच्यते ।

३ S धारणा इति लक्ष्यं प्रतिपत्तिर्यथास्वमित्यनेनाद्यभेदं दर्शयति । मत्यवस्थानमित्यनेन द्वितीयां लब्धिरूपां धारणां कथयति । अवधारणं चेत्यनेन तृतीयं भेदं कथयति ।

त्यर्थः । *बह्ववगृह्णाति† अल्पमवगृह्णाति[१] । बहुविधमवगृह्णाति एकविधमवगृह्णाति । क्षिप्रमवगृह्णाति चिरेणावगृह्णाति । अनिश्रितमवगृह्णाति निश्रित[२]मवगृह्णाति । अनुक्तमवगृह्णाति उक्तमवगृह्णाति[३] । ध्रुवमवगृह्णाति अध्रुवमवगृह्णाति । इत्येवमीहादीनामपि विद्यात्‡ ॥

## अर्थस्य ॥ १७ ॥

अवग्रहादयो मतिज्ञानविकल्पा अर्थस्य भवन्ति ॥

## व्यञ्जनस्यावग्रहः ॥ १८ ॥

व्यञ्जनस्यावग्रह एव भवति नेहादयः । एवं द्विविधोऽवग्रहो व्यञ्जनस्यार्थस्य च । ईहादयस्त्वर्थस्यैव ॥

---

* K, H add तद्यथा । † K बहुमव० । ‡ K विन्द्यात् ।

---

१ S एवं औपचारिको ( व्यावहारिको ) ऽवग्रहस्तमङ्गीकृत्य बह्ववगृह्णातीत्येतदुच्यते । न त्वेकसमयवर्तिनं नैश्चयिकम् । H तत्र बहुमवगृह्णाति वेणुवीणामृदङ्गपटहध्वनिसमुदयं क्षयोपशमोत्कर्षात् । कथमेतद्विनिश्चीयते । उत्तरकालं तथा अपायादिदर्शनात् । न ह्यसत्यवग्रहभेदे स तथाविधो युक्तोऽतिप्रसङ्गात् । व्यावहारिकावग्रहमपेक्ष्यैवमुक्तमित्यन्ये । स ह्यपाय एवोत्तरेहाद्यपेक्षयावग्रह इति ॥

२ S निश्रितो लिङ्गप्रमितो ऽभिधीयते । H अनिश्रितं वेणुवादिशब्दमन्यनिरपेक्षमेव शब्दादिना मेरीशब्दग्रहणवदिति वृद्धव्याख्या ॥

३ S says that the text is उक्तमवगृह्णाति अनुक्तमवगृह्णाति but others through fear of अव्याप्तिदोष substitute निश्चितमवगृह्णाति and अनिश्चितमवगृह्णाति । H संदिग्धमवगृह्णाति असंदिग्धमवगृह्णाति & explains असंदिग्धं to mean निश्चितम् ॥

## न चक्षुरनिन्द्रियाभ्याम् ॥ १९ ॥

चक्षुषा नोइन्द्रियेण च व्यञ्जनावग्रहो न भवति। चतुर्भिरिन्द्रियैः शेषैर्भवतीत्यर्थः। एवमेतन्मतिज्ञानं द्विविधं[१] चतुर्विधं अष्टाविंशतिविधं अष्टषष्ट्युत्तरशतविधं षट्त्रिंशत्त्रिशतविधं च भवति ॥

अत्राह। उक्तोमस्तावन्मतिज्ञानम्। अथ श्रुतज्ञानं किमिति। अत्रोच्यते ॥

## श्रुतं मतिपूर्वं द्व्यनेकद्वादशभेदम् ॥ २० ॥

श्रुतज्ञानं मतिज्ञानपूर्वकं[२] भवति। श्रुतमाप्तवचनमागम उपदेश ऐतिह्यमाम्नायः प्रवचनं जिनवचनमित्यनर्थान्तरम्। *तद्द्विविधमङ्गबाह्यमङ्गप्रविष्टं च। तत्पुनरनेकविधं द्वादशविधं च यथासङ्ख्यम्। अङ्गबाह्यमनेकविधम्। तद्यथा। सामायिकं

---

* H K तदेतद्द्विविध०।

१ S H द्विविधमिति इन्द्रियनिमित्तमनिन्द्रियनिमित्तं च। चतुर्विधमवग्रहादिभेदतः। अष्टाविंशतिविधमिति स्पर्शनादीनां मनःपर्यवसानानां षण्णामेकैकस्य चत्वारो भेदा अवग्रहादयस्ते समुदिताः सर्वेऽपि चतुर्विंशतिरुपजातास्ततश्चक्षुर्मनोवर्जः स्पर्शनादीनां यो व्यञ्जनानामवग्रहश्चतुर्भेदः स प्रक्षिप्तस्ततोऽष्टाविंशतिविधं भवति। अष्टषष्ट्युत्तरशतविधमिति तस्या एवाष्टाविंशतेरेकैको भेदः षड्विधो भवति बह्वादिभेदेन। षट्त्रिंशत्त्रिशतविधमिति तस्या एवाष्टाविंशतेरेकैको भेदो द्वादशधा भवति सेतरबह्वादिद्वादशकेन ॥

२ S अपेक्षाकारणं चेह पूर्वमित्यनेनोच्यते ॥ H युगपदेव मतिश्रुतयोर्लब्धिस्तत्कथं मतिपूर्वकत्वं। उच्यते। उपयोगापेक्षया श्रुतोपयोगो मतिनिमित्त इत्यर्थः ॥

चतुर्विंशतिस्तवो वन्दनं प्रतिक्रमणं कायव्युत्सर्गः[1]* प्रत्याख्यानं दशवैकालिकं उत्तराध्यायाः† दशाः[2] कल्पव्यवहारौ निशीथमृषि[3]भाषितान्ये‡वमादि॥ अङ्गप्रविष्टं द्वादशविधम्। तद्यथा। आचारः सूत्रकृतं स्थानं समवायः व्याख्याप्रज्ञप्तिः ज्ञातधर्मकथा§ उपासकाध्ययनदशाः अन्तकृद्दशाः अनुत्तरौपपातिकदशाः प्रश्नव्याकरणं विपाकसूत्रं दृष्टिपात[4] इति॥ अत्राह। मतिज्ञानश्रुतज्ञानयोः कः प्रतिविशेष इति। अत्रोच्यते। उत्पन्नाविनष्टार्थग्राहकं साम्प्रतकालविषयं मतिज्ञानम्। श्रुतज्ञानं तु त्रिकालविषयं उत्पन्नविनष्टानुत्पन्नार्थग्राहकम्॥ अत्राह। गृह्णीमो|| मतिश्रुतयोर्नानात्वम्। अथ श्रुतज्ञानस्य द्विविधमनेकद्वादशविधमिति किं कृतः प्रतिविशेष इति। अत्रोच्यते। वक्तृविशेषाद्द्वैविध्यम्। यद्भगवद्भिः सर्वज्ञैः सर्वदर्शिभिः पर-

* B कायोत्सर्गः। † S com. उत्तराध्ययनानि।
‡ MSS. ॰मौत्ये॰। § K ज्ञाताधर्मकथा।
|| K गृह्णीमस्तावत्।

१ S H कृतस्य पापस्य यत्र कायपरित्यागेन क्रियमाणेन विशुद्धिराख्यायते स कायव्युत्सर्गः॥

२ S H पूर्वेभ्य आनीय सङ्घसन्ततिहिताय स्थापितान्यध्ययनानि दशा उच्यन्ते। दशा इति वावस्थावचनः शब्दः काचित्प्रतिविशिष्टावस्था यतीनां यासु वर्ण्यते ता दशा इति॥

३ S H ऋषिभिर्भाषितानि प्रत्येकबुद्धादिभिः कापिलीयादीनि॥

४ S H दृष्टिनामाज्ञानिकादीनां यत्र प्ररूपणा कृता स दृष्टिवादः तासां वा तत्र पातः॥

मर्षिभिरर्हद्भिस्तत्स्वाभाव्यात्परमशुभस्य च प्रवचनप्रतिष्ठापनफलस्य तीर्थकरनामकर्मणोऽनुभावादुक्तं भगवच्छिष्यैरतिशयवद्भिरुत्तमातिशयवाग्बुद्धिसंपन्नैर्गणधरैर्दृब्धं तदङ्गप्रविष्टम्। गणधरानन्तर्यादिभिस्त्वत्यन्तविशुद्धागमैः परमप्रकृष्टवाङ्मतिशक्तिभिराचार्यैः कालसंहननायुर्दोषादल्पशक्तीनां शिष्याणामनुग्रहाय यत्प्रोक्तं तदङ्गबाह्यमिति॥ सर्वज्ञप्रणीतत्वादानन्त्याच्च ज्ञेयस्य श्रुतज्ञानं मतिज्ञानान्महाविषयम्। तस्य[1] च महाविषयत्वात्तांस्तानर्थानधिकृत्य प्रकरणसमाप्त्यपेक्षमङ्गोपाङ्गनानात्वम्। किं चान्यत्। सुखग्रहणधारणविज्ञानापोह[2]प्रयोगार्थं* च। अन्यथा ह्यनिबद्धमङ्गोपाङ्गशः समुद्रप्रतरणवद्दुरध्यवसेयं स्यात्। एतेन[3] पूर्वाणि वस्तूनि प्राभृतानि प्राभृतप्राभृतानि अध्ययनान्युद्देशाश्च† व्याख्याताः॥ अत्राह। मतिश्रुतयोस्तुल्यविषयत्वं वक्ष्यति‡। द्रव्येष्वसर्वपर्यायेष्विति। तस्मादेकत्वमेवास्त्विति। अत्रोच्यते। उक्तमेतत् साम्प्रतकालविषयं मतिज्ञानं श्रुतज्ञानं तु त्रिकालविषयं विशुद्धतरं चेति§। किं चान्यत्। मतिज्ञानमिन्द्रियानिन्द्रियनिमित्तमात्मनो ज्ञस्वाभाव्यात्पारिणामिकम्। श्रुतज्ञानं तु तत्पूर्वकमाप्तोपदेशाद्भवतीति॥

---

* K °विज्ञानेहापोहप्रयोगार्थं°।

† H K °न्युद्देशाः पदानि च व्याख्यातानि। ‡ I. 27. § S C च only.

---

१ S H तस्य = श्रुतस्य। तांस्तानर्थानधिकृत्य जीवादीनाश्रित्य॥

२ S H अपोहं = निश्चयं।

३ S H एतेनाङ्गोपाङ्गभेदप्रयोजनेन सुखग्रहणादिना॥

अत्राह। उक्तं श्रुतज्ञानम्। अथावधिज्ञानं किमिति*। अत्रोच्यते॥

## द्विविधोऽवधिः॥ २१॥

भवप्रत्ययः क्षयोपशमनिमित्तश्च॥

तत्र

## भवप्रत्ययो नारकदेवानाम्॥ २२॥

नारकाणां देवानां च यथास्वं भवप्रत्ययमवधिज्ञानं भवति। भवप्रत्ययं भवहेतुकं† भवनिमित्तमित्यर्थः। तेषां‡ हि भवोत्पत्तिरेव तस्य हेतुर्भवति पक्षिणामाकाशगमनवत् न शिक्षा न तप इति॥

## यथोक्तनिमित्तः षड्विकल्पः शेषाणाम्॥ २३॥

यथोक्तनिमित्तः§ क्षयोपशमनिमित्त इत्यर्थः। तदेतदवधिज्ञानं क्षयोपशमनिमित्तं षड्विधं भवति शेषाणाम्। शेषाणामिति नारकदेवेभ्यः शेषाणाम् तिर्यग्योनिजानां मनुष्याणां च। अवधिज्ञानावरणीयस्य कर्मणः क्षयोपशमाभ्यां भवति षड्विधम्। तद्यथा। अनानुगामिकं आनुगामिकं हीयमानकं वर्धमानकं अनवस्थितं अवस्थितमिति। तत्रानानुगामिकं यत्र

---

* B किं यदस्यानन्तरमुद्दिष्टमिति। † H omits भवहेतुकम्।

‡ K तथा for तेषाम्। § K adds इति।

क्षेत्रे स्थितस्योत्पन्नं ततः प्रच्युतस्य प्रतिपतति प्रश्नादेश[1]पुरुषज्ञानवत् ॥ **आनुगामिकं** यत्र क्वचिदुत्पन्नं क्षेत्रान्तरगतस्यापि न प्रतिपतति भास्करप्रकाशवत् घटरक्तभाववच्च* ॥ **हीयमानकं** असंख्येयेषु द्वीपेषु समुद्रेषु पृथिवीषु विमानेषु तिर्यगूर्ध्वमधो† यदुत्पन्नं क्रमशः संक्षिप्यमाणं प्रतिपतति आ [2]अङ्गुलासंख्येयभागात् प्रतिपतत्येव वा‡ [3]परिच्छिन्नेन्धनोपादानसंतत्यग्निशिखावत् ॥ **वर्धमानकं** यदङ्गुलस्यासंख्येयभागादिषूत्पन्नं वर्धते आ सर्वलोकात् अधरोत्तरारणिनिर्मथनोत्पन्नो[4]पात्तशुष्कोपचीयमानाधीयमानेन्धनराश्यग्निवत् ॥ **अनवस्थितं** हीयते वर्धते च वर्धते हीयते च प्रतिपतति चोत्पद्यते§ चेति पुनः पुनरूर्मिवत् ॥ **अवस्थितं** यावति क्षेत्रे उत्पन्नं भवति ततो

---

* S वा for च ।　　† B adds वा ।
‡ K omits वा ।　　§ C चोत्पतति ।

---

१ S H अथवा प्रश्नादेशः प्रधानपुरुषस्तन्निष्ठस्तत्परायणस्तस्य ज्ञानं तद्वदिति । का पुनर्भावना । यथा नैमित्तिकः कश्चिदादिशन्कस्मिंश्चिदेव स्थाने शक्नोति संवादयितुं न सर्वत्र पृच्छ्यमानमर्थमेवं तदप्यवधिज्ञानं यत्र स्थितस्योत्पन्नं तत्रस्थ एवोपलभते तेन नान्यत्रेति ॥

२ S H अङ्गुलशब्दस्य परिभाषितो ऽर्थो दृष्टव्यः ॥

३ S परिच्छिन्ना इन्धनोपादानसन्ततिर्यस्यामग्निशिखायां सा परिच्छिन्नेन्धनोपदानसन्तत्यग्निशिखा । परितः सर्वासु दिक्षु छिन्ना परिच्छिन्ना । इन्धनस्य नैरन्तर्येण प्रक्षेपः ॥

४ S उपात्तं प्रक्षिप्तं । उपचीयमानो वृद्धिं गच्छन्नित्यर्थः । आधीयमानः प्रक्षिप्यमाणः ॥

न प्रतिपतत्या केवलप्राप्तेः* आ भवक्षयाद्वा जात्यन्तरस्थायि वा भवति लिङ्गवत् ॥

उक्तमवधिज्ञानम् । मनःपर्यायज्ञानं वक्ष्यामः ।

### ऋजुविपुलमती मनःपर्यायः ॥ २४ ॥

मनःपर्यायज्ञानं द्विविधम् । ऋजुमतिमनःपर्यायज्ञानं विपुलमतिमनःपर्यायज्ञानं च ॥

अत्राह । कोऽनयोः प्रतिविशेष इति । अत्रोच्यते ।

### विशुद्ध्यप्रतिपाताभ्यां तद्विशेषः ॥ २५ ॥

विशुद्धिकृतश्चाप्रतिपातकृतश्चानयोः प्रतिविशेषः । तद्यथा । ऋजुमतिमनःपर्यायाद्विपुलमतिमनःपर्यायज्ञानं विशुद्धतरम् । किं चान्यत् । ऋजुमतिमनःपर्यायज्ञानं प्रतिपतत्यपि भूयो[१] विपुलमतिमनःपर्यायज्ञानं तु न प्रतिपततीति ॥

अत्राह । अथावधिमनःपर्यायज्ञानयोः कः प्रतिविशेष इति । अत्रोच्यते ।

### विशुद्धिक्षेत्रस्वामिविषयेभ्योऽवधिमनःपर्यययोः ॥२६॥

विशुद्धिकृतः क्षेत्रकृतः स्वामिकृतो विषयकृतश्चानयोर्विशेषो भवत्यवधिमनःपर्यायज्ञानयोः । तद्यथा । अवधिज्ञानान्मनःपर्यायज्ञानं विशुद्धतरम् । यावन्ति हि रूपाणि† द्रव्याण्यवधिज्ञानी जानीते तानि मनःपर्यायज्ञानी विशुद्धतराणि

---

* B & K add चावतिष्ठते ।   † B C रूपीणि ।

१ S भूयः = पुनः to be construed with what follows.

मनोगतानि* जानीते॥ किं चान्यत्। क्षेत्रकृतश्चानयोः प्रतिविशेषः। अवधिज्ञानमङ्गुलस्यासंख्येयभागादिषूत्पन्नं† भवत्या सर्वलोकात्। मनःपर्यायज्ञानं तु मनुष्यक्षेत्र एव भवति नान्यक्षेत्रे‡ इति॥ किं चान्यत्। स्वामिकृतश्चानयोः प्रतिविशेषः। अवधिज्ञानं संयतस्य असंयतस्य वा§ सर्वगतिषु भवति। मनःपर्यायज्ञानं तु मनुष्यसंयतस्यैव भवति नान्यस्य॥ किं चान्यत्। विषयकृतश्चानयोः प्रतिविशेषः। रूपिद्रव्येष्वसर्वपर्यायेष्ववधेर्विषयनिबन्धो भवति। तदनन्तभागे मनःपर्यायस्येति॥

अत्राह। उक्तं मनःपर्यायज्ञानम्। अथ केवलज्ञानं किमिति। अत्रोच्यते। केवलज्ञानं दशमेऽध्याये वक्ष्यते। मोहक्षयाज्ज्ञानदर्शनावरणान्तरायक्षयाच्च केवलमिति|| ॥

अत्राह। एषां मतिज्ञानादीनां ज्ञानानां कः कस्य विषयनिबन्ध इति। अत्रोच्यते।

## मतिश्रुतयोर्निबन्धः सर्वद्रव्येष्वसर्वपर्यायेषु ॥ २७ ॥

मतिज्ञानश्रुतज्ञानयोर्विषयनिबन्धो भवति सर्वद्रव्येष्वसर्वपर्यायेषु। ताभ्यां हि सर्वाणि द्रव्याणि जानीते न तु सर्वैः पर्यायैः।

---

* K मनोरहस्यगतानीव जानीते। † K omits उत्पन्नम्।

‡ S नान्यक्षेत्रेति। § HAC have संयतासंयतस्य and च for वा। S वाशब्दात्संयतासंयतस्य वा। || X. I.

## रूपिष्ववधेः ॥ २८ ॥

रूपिष्वेव द्रव्येष्ववधिज्ञानस्य विषयनिबन्धो भवति असर्वपर्यायेषु। सुविशुद्धेनाप्यवधिज्ञानेन रूपीण्येव* द्रव्याण्यवधिज्ञानी जानीते तान्यपि न सर्वैः पर्यायैरिति ॥

## तदनन्तभागे मनःपर्यायस्य ॥ २९ ॥

यानि रूपीणि† द्रव्याण्यवधिज्ञानी जानीते ततोऽनन्तभागे मनःपर्यायस्य विषयनिबन्धो भवति । अवधिज्ञानविषयस्यानन्तभागं मनःपर्यायज्ञानी जानीते रूपिद्रव्याणि‡ मनोरहस्यविचारगतानि च§ मानुष||क्षेत्रपर्यापन्नानि[१] विशुद्धतराणि चेति ॥

## सर्वद्रव्यपर्यायेषु केवलस्य ॥ ३० ॥

सर्वद्रव्येषु सर्वपर्यायेषु च¶ केवलज्ञानस्य विषयनिबन्धो भवति। तद्धि सर्वभावग्राहकं संभिन्नलोकालोकविषयम् । नातः परं ज्ञानमस्ति । न च केवलज्ञानविषयात्परं किंचिद्न्यज्ज्ञेयमस्ति[२] । केवलं परिपूर्णं समग्रमसाधारणं निरपेक्षं विशुद्धं सर्वभावज्ञापकं लोकालोकविषयमनन्तपर्यायमित्यर्थः ॥

अत्राह। एषां मतिज्ञानादीनां युगपदेकस्मिञ्जीवे कति भवन्तीति । अत्रोच्यते ।

---

* K रूपाण्येव । † K रूपाणि । ‡ रूपद्रव्याणि ।
§ S omits च । || K मनुष्य । ¶ omits च ।

---

१ SH पर्यापन्नानि = व्यवस्थितानि ।
२ S यदप्रकाशितं केवलेनेति ।

## एकादीनि भाज्यानि युगपदेकस्मिन्ना चतुर्भ्यः ॥ ३१ ॥

एषां मत्यादीनां ज्ञानानामादित एकादीनि भाज्यानि युगपदेकस्मिञ्जीव आ चतुर्भ्यः । *कस्मिंश्चिज्जीवे मत्यादीनामेकं[१] भवति । कस्मिंश्चिज्जीवे द्वे भवतः । कस्मिंश्चित्त्रीणि भवन्ति । कस्मिंश्चिच्चत्वारि भवन्ति । श्रुतज्ञानस्य तु मतिज्ञानेन नियतः सहभावस्तत्पूर्वकत्वात् । यस्य श्रुतज्ञानं तस्य नियतं मतिज्ञानम् । यस्य तु मतिज्ञानं तस्य श्रुतज्ञानं स्याद्वा न वेति ॥ अत्राह । अथ केवलज्ञानस्य पूर्वैर्मतिज्ञानादिभिः किं† सहभावो भवति । नेत्युच्यते‡ । केचिदाचार्या व्याचक्षते । नाभावः । किं तु तदभिभूतत्वादकिंचित्कराणि भवन्तीन्द्रियवत् । यथा वा व्यभ्रे नभसि आदित्य उदिते भूरितेजस्त्वादादित्येनाभिभूतान्यन्यतेजांसि [२]ज्वलनमणिचन्द्रनक्षत्रप्रभृतीनि प्रकाशनं प्रत्यकिंचित्कराणि भवन्ति तद्वदिति । केचिदप्याहुः । [३]अपायसद्द्रव्यतया मतिज्ञानं तत्पूर्वकं श्रुतज्ञानमवधिज्ञानमनःपर्यायज्ञाने च रूपिद्रव्यविषये तस्मान्नैतानि केवलिनः सन्तीति ॥ किं चान्यत् । मतिज्ञानादिषु चतुर्षु पर्यायेणोपयोगो भवति न

---

* K adds तद्यथा । † C omits किं । ‡ HK नेति । अत्रोच्यते ।

---

१ S येन निसर्गसम्यग्दर्शनं प्राप्तं तस्य मतिज्ञानमाद्यमेवैकं–न श्रुतं ॥

२ S ज्वलनोऽग्निः ॥

३ S अपायो नाम श्रोत्रादीन्द्रियोपलब्धस्येहितस्यार्थस्य निश्चयः । नैवंविधोऽपायः केवलिनोऽस्ति । यावच्च शोभनानि सम्यक्त्वदलिकानि सन्ति तावन्मतिज्ञानं । तदेतद्द्वयमपि दूरोत्सारितं केवलिनः ॥

युगपत् । [1]संभिन्नज्ञानदर्शनस्य तु भगवतः केवलिनो युगपत्सर्व-

---

१ S किं चान्यदित्यादिना । स्वाभिप्रायद्वयं प्रकाशयति । मतिज्ञानादिषु चतुर्षु मतिश्रुतावधिमनःपर्यायज्ञानेषु पर्यायेण क्रमेणोपयोगः *स्वविषयग्राहिता भवति न युगपदेकस्मिन्काले न स्वस्वविषय एषां व्यापारः । यदा मतिज्ञानी मतिज्ञानेनोपयुक्तो न तदा श्रुतादीनामन्यतमेन केनचित् । यदा च श्रुतज्ञानेनोपयुक्तो न तदा मत्यादीनामन्यतमेनेति । केवलिनस्तु क्रमेणैतज्ज्ञानगतो नास्त्युपयोगः ॥ यतः संभिन्न इत्यादि । ज्ञानं विशेषग्राहि दर्शनं सामान्यग्राहि ज्ञानं च दर्शनं च ज्ञानदर्शने संभिन्ने सर्वद्रव्यपर्यायग्राहके ज्ञानदर्शने यस्य स संभिन्नज्ञानदर्शनः तस्यैव† । माहात्म्यादिगुणान्वितस्य भगवतः । केवलं सर्वार्थग्राहि ज्ञानं यस्यास्ति तस्य केवलिनः । युगपदेकस्मिन्समये केवलज्ञाने ऽनुसमयमुपयोगो भवति दर्शने च‡ । कीदृशि केवलज्ञाने दर्शने वा । उच्यते । सर्वभावग्राहके सर्वे भावाः पञ्चास्तिकायास्तेषां ग्राहकं विशेषे परिच्छेदकमित्यर्थः । निरपेक्षे निर्गता अपेक्षा ज्ञेयं मुक्त्वान्यत्र इन्द्रियादौ यस्य तन्निरपेक्षं तस्मिन्निरपेक्षे । केवलज्ञाने विशेषग्राहिणि । दर्शने च सर्वभावग्राहके निरपेक्षे सामान्यग्राहिणि अनुसमयमुपयोगो भवतीति । अनुगतः अव्यवहितः समयो ऽत्यन्ताविभागः कालो यत्र कालसन्ताने स कालसन्तानः अनुसमयस्तमनुसमयं कालसन्तानमुपयोगो भवति "कालध्वनोरत्यन्तसंयोगे (पा० २।३।५) इति

---

* U स्वामि । † U तस्येव । ‡ CF प्रज्ञापना ।

भावग्राहके निरपेक्षे केवलज्ञाने केवलदर्शने चानुसमयमुपयोगो

---

द्वितीया। अव्ययीभावो वा विभक्त्यादिषु (पा० २।१।६) वारंवारेणोपयोगो भवति इति यावत्। एकस्मिन्समये केवलज्ञानोपयोगे वृत्ते ततो ऽन्यस्मिन्केवलदर्शनोपयोग इति एवं सर्वकालमवसेयम्। यद्यपि केचित्पण्डितंमन्याः सूत्राण्यन्यथाकारमर्थमाचक्षते तर्कबलात्तु विशुद्धबुद्धयो वारंवारेणोपयोगो नास्तीति तत्तु न प्रमाणयामः। यत आम्नाये भूयांसि सूत्राणि वारंवारेणोपयोगं प्रतिपादयन्ति।

नाणंमि दंसणंमि य एत्तो एगतरगम्मि उवउत्ता। तथा—
सव्वस्स केवलिस्स वि जुगवं दो णत्थि उवओगा॥

इत्यादीनि। अथैवं मन्येथाः सूत्राणामेषामन्य एवार्थो ऽन्य एवाव्युत्पन्नबुद्धिभिराख्यायत इत्येतदपि दुःश्रद्धानं। यतः सत्यं सूत्राण्यन्धपुरुषस्थानानि* सुधिया गृहीतानि शक्नुवन्त्यर्थं ख्यापयितुम्। यथा श्वेतो धावतीत्यादि एवंविधेषु च सूत्रेष्ववश्यमात्रसंप्रदाय एवान्वेषणीयो भवति स चाविच्छेदेनार्थसंप्रदायः समस्तश्रुतधरादधिकारिणः परिस्रवमानो† मुनिपरम्परया यावदद्येत्यागमादविगणनेन वारंवारमित्यभ्युपेयते‡। (वारंवारेणोपयोग इति कुतः पुनरर्थागमो ऽकस्मादुपयोगवादिनः स्वत एव चेत्प्रेक्षितः स्वमनीषिका सिद्धान्तविरोधिनी न प्रमाणमित्यभ्युपेयते)। अथागमात्प्रदर्शनीयस्तर्ह्यसौ तस्माद्यत्किंचिदेतदिति।

---

* U ख्यानीयानि। † U परिस्रवमानो।

‡ U omits words in the brackets.

भवति॥ किं चान्यत्। क्षयोपशमजानि चत्वारि ज्ञानानि पूर्वाणि क्षयादेव केवलं। तस्मान्न केवलिनः शेषाणि ज्ञानानि सन्तीति*[१]॥

## मतिश्रुतावधयो विपर्ययश्च† ॥ ३२ ॥

मतिज्ञानं श्रुतज्ञानमवधिज्ञानमिति। विपर्ययश्च भवत्यज्ञानं चेत्यर्थः। ज्ञानविपर्ययो ऽज्ञानमिति‡। अत्राह। तदेव ज्ञानं तदेवाज्ञानमिति। ननु§ च्छायातपवच्छीतोष्णवच्च तदत्य-

* C सवन्तीति। † HK मतिश्रुताविभङ्गा विपर्ययश्च।
‡ विपर्ययश्च भवत्यज्ञानविपर्ययो ज्ञानमिति। § K न तु।

अथ* मन्यसे साकारो ऽनाकार इति शब्दभेदः केवलमत्र केवलिनि अर्थस्त्वभिन्न एव यतः सर्वमेव विशेषपरिच्छेदकं ज्ञानं केवलिनि समस्ति न दर्शनमिति। इदमपि न जाघट्यते ज्ञानावरणं भगवतः क्षीणं दर्शनावरणं च निरवशेषं। तच्चैकत्वे सति को ऽयमावरणभेदाभिमानो निःप्रयोजनः। तथा साकारोपयोगो ऽष्टधा दर्शनोपयोगश्चतुर्धेति तथा ज्ञानं पञ्चधा दर्शनं चतुर्धेति एकत्वे सति कुत इदमपि घटमानकम्। न वातीवाभिनिवेशो ऽस्माकं युगपदुपयोगो मा भूदिति वचनं न पश्यामस्तादृशं। क्रमोपयोगार्थप्रतिपादने तु भूरिवचनमुपलभामहे। न चान्यथा जिनवचनं कर्तुं शक्यते सुविदुषापीति॥

१ Var. S ज्ञानदर्शनावरणयोस्तु कृत्स्नक्षयात् केवलज्ञानदर्शने भवतस्तस्मान्न केवलिनः शेषज्ञानानि॥

* U इति for अथ।

न्तविरुद्धमिति। अत्रोच्यते। मिथ्यादर्शनपरिग्रहाद्विपरीतग्राहकत्वमेतेषाम्[१*]। तस्मादज्ञानानि भवन्ति। तद्यथा। मत्यज्ञानं श्रुताज्ञानं विभङ्गज्ञानमिति[†]। अवधिर्विपरीतो[‡] विभङ्ग इत्युच्यते[§]॥

अत्राह। उक्तं भवता सम्यग्दर्शनपरिगृहीतं मत्यादिज्ञानं भवत्यन्यथा[||]ज्ञानमेवेति। मिथ्यादृष्टयोऽपि च[¶] भव्याश्चाभव्याश्चेन्द्रियनिमित्तानविपरीतान्स्पर्शादीनुपलभन्ते उपदिशन्ति च[**] स्पर्शं स्पर्श[††] इति रसं रस इति। एवं शेषान्। तत्कथमेतदिति। अत्रोच्यते। तेषां हि विपरीतमेतद्भवति।

## [२]सदसतोरविशेषाद्यदृच्छोपलब्धेरुन्मत्तवत्॥ ३३॥

यथोन्मत्तः कर्मोदयादुपहतेन्द्रियमतिर्विपरीतग्राही भवति सोऽश्वं गौरित्यध्यवस्यति गां चाश्व[‡‡] इति लोष्टं सुवर्णमिति सुवर्णं लोष्ट[§§] इति लोष्टं च लोष्ट[||||] इति सुवर्णं[¶¶] सुवर्णमिति

---

* K मिथ्यादर्शनपरिगृहीतग्राहकमेतेषाम्।
† K विभङ्गमिति।
‡ H अवधेर्विपरीतो, K अवधिविपरीतो।
§ AC ग्रंथ १५०।
|| SK add तु० त्यन्यथा लज्ञान।
¶ C omits च।
** C omits च।
†† K स्पर्शमिति रसं रसमिति।
‡‡ AC चाश्वमिति।
§§ K लोष्टमिति।
|||| K लोष्टमिति।
¶¶ HK add च।

---

१ S एतेषामिति मतिश्रुतावधीनां॥

२ S सद्विद्यमानमसदविद्यमानं। अविशेषादयथार्थावबोधात्। यदृच्छोपलब्धेरिति अनालोचिता अर्थोपलब्धिस्तस्या यदृच्छोपलब्धेः स्पर्शादिपरिज्ञानं भवति उन्मत्तस्येव॥

तस्यैवमविशेषेण लोष्टं सुवर्णं सुवर्णं लोष्टमिति विपरीतमध्यवस्यतो नियतमज्ञानमेव भवति—तद्वन्मिथ्यादर्शनोपहतेन्द्रियमतेर्मतिश्रुतावधयोऽप्यज्ञानं* भवन्ति ॥

उक्तं ज्ञानं। चारित्रं नवमेऽध्याये वक्ष्यामः। प्रमाणे चोक्ते। नयान्वक्ष्यामः। तद्यथा।

## नैगमसंग्रहव्यवहारर्जुसूत्रशब्दा नयाः ॥ ३४ ॥

नैगमः संग्रहो व्यवहार ऋजुसूत्रः शब्द इत्येते पञ्चनया भवन्ति। तत्र

## आद्यशब्दौ द्वित्रिभेदौ ॥ ३५ ॥

आद्य इति सूत्रक्रमप्रामाण्यान्नैगममाह। स द्विभेदो देशपरिक्षेपी सर्वपरिक्षेपी चेति। शब्दस्त्रिभेदः साम्प्रतः समभिरूढ एवम्भूत इति ॥ अत्राह। किमेषां लक्षणमिति। अत्रोच्यते। निगमेषु येऽभिहिताः शब्दास्तेषामर्थः† शब्दार्थपरिज्ञानं च देशसमग्रग्राही नैगमः। अर्थानां सर्वैकदेशसंग्रहणं संग्रहः। लौकिकसम उपचारप्रायो विस्तृतार्थो व्यवहारः। सतां साम्प्रतानामर्थानामभिधानपरिज्ञानमृजुसूत्रः। यथार्थाभिधानं शब्दः। नामादिषु प्रसिद्धपूर्वाच्छब्दादर्थे प्रत्ययः साम्प्रतः। सत्स्वर्थेष्वसंक्रमः समभिरूढः। व्यञ्जनार्थयोरेवम्भूत इति ॥

अत्राह। उद्दिष्टा भवता नैगमादयो नयाः। तन्नया इति‡ कः पदार्थ इति। अत्रोच्यते। नयाः प्रापकाः कारकाः

* HK ऽप्यज्ञानान्येव। † HK चार्थाः। ‡ S adds तु।

साधका निर्वर्तका निर्भासका उपलम्भका व्यञ्जका इत्यनर्थान्तरम् । जीवादीन्पदार्थान्नयन्ति प्राप्नुवन्ति* कारयन्ति साधयन्ति निर्वर्तयन्ति निर्भासयन्ति उपलम्भयन्ति व्यञ्जयन्तीति नयाः ॥

अत्राह । किमेते [1]तन्त्रान्तरीया वादिन आहोस्वित्स्वतन्त्रा एव चोदकपक्षग्राहिणो मतिभेदेन विप्रधाविता इति । अत्रोच्यते । नैते तन्त्रान्तरीया नापि स्वतन्त्रा मतिभेदेन विप्रधाविताः । ज्ञेयस्य †त्वर्थस्या[2]ध्यवसायान्तराण्येतानि[3] । तद्यथा । घट इत्युक्ते योऽसौ चेष्टाभिर्निर्वृत्त[4] ऊर्ध्वकुण्डलौ[5]ष्ठायतवृत्तग्रीवोऽधस्तात्परिमण्डलो जलादीनामाहरणधारणसमर्थ उत्तरगुणनिर्वर्तनानिर्वृत्तो[6] द्रव्यविशेषस्तस्मिन्नेकस्मिन्विशेषवति तज्जातीयेषु ‡वा सर्वेष्वविशेषा[7]त्परिज्ञानं नैगमनयः । एकस्मिन्वा

* HK प्रापयन्ति ।　　† K omits तु ।　　‡ K omits वा ।

१ S तन्त्रं जैनं प्रवचनं तस्मादन्यत्काणभुजादिशास्त्रं तस्मिन्भवाः कुशला वा तन्त्रान्तरीयाः । अवश्यं वदन्तीति वादिनो ऽतः किं वैशेषिकादयो वादिनो नया भण्यन्ते । आत्मीयं तन्त्रमेषां ते स्वतन्त्राः । चोदको दुरुक्तादिसूचकस्तस्य पक्षो विषयः तं चोदकपक्षं ग्रहीतुं शीलमेषामिति चोदकपक्षग्राहिणः । विप्रधाविता अयथार्थनिरूपका इति ॥

२ S अर्थस्य घटपटादेः ॥　　३ S एतानीति नैगमादीनि ॥

४ S कुम्भकारचेष्टानिर्वृत्तः ॥　　५ S कुण्डल = वृत्त ॥

६ S उत्तरेत्यादि पाकजरक्तादिगुणपरिसमाप्तया निष्पन्नः ।

७ S अविशेषादभेदेन ।

बहुषु वा नामादिविशेषितेषु साम्प्रतातीतानागतेषु घटेषु संप्रत्ययः[१] संग्रहः। तेष्वेव लौकिकपरीक्षकग्राह्येषूपचारगम्येषु[२] यथास्थूलार्थेषु संप्रत्ययो व्यवहारः। तेष्वेव सत्सु साम्प्रतेषु संप्रत्यय ऋजुसूत्रः। तेष्वेव साम्प्रतेषु नामादीनामन्यतमग्राहिषु प्रसिद्धपूर्वकेषु* घटेषु† संप्रत्ययः साम्प्रतः शब्दः‡। तेषामेव साम्प्रतानामध्यवसायासंक्रमो वितर्कध्यानवत् समभिरूढः। तेषामेव व्यञ्जनार्थयोरन्योन्यापेक्षार्थग्राहित्वमेवम्भूत इति॥

अत्राह। एवमिदानीमेकस्मिन्नर्थेऽध्यवसायनानात्वान्नु [३]विप्रतिपत्तिप्रसङ्ग इति। अत्रोच्यते। यथा सर्वमेकं सदविशेषात् सर्वं द्वित्वं जीवाजीवात्मकत्वात् सर्वं त्रित्वं द्रव्यगुणपर्यायावरोधात् सर्वं चतुष्टं§ चतुर्दर्शनविषयावरोधात् सर्वं पञ्चत्वमस्तिकायावरोधात् सर्वं षट्त्वं षड्द्रव्यावरोधादिति। यथैता न विप्रतिपत्तयोऽथ चाध्यवसायस्थानान्तराण्येतानि तद्वन्नयवादा इति। किं चान्यत्। यथा मतिज्ञानादिभिः पञ्चभिर्ज्ञानैर्धर्मादीनामस्तिकायानामन्यतमोऽर्थः पृथक् पृथगुपलभ्यते पर्यायविशुद्धिविशेषादुत्कर्षेण न च ता विप्रतिपत्तयः

---

* C पूर्वेषु। † K शब्देषु।
‡ K साम्प्रतशब्दः। § H चतुष्कं A चतुष्टयं।

---

१ S संप्रत्ययः सामान्यं घटो घट इति परिज्ञानं॥

२ S उपचारगम्येष्विति लोकक्रियाधारेषु॥

३ S विरुद्धप्रतीतिर्विप्रतिपत्तिः॥

तद्वन्नयवादाः। यथा वा प्रत्यक्षानुमानोपमानाप्तवचनैः प्रमाणै-रेकोऽर्थः प्रमीयते* स्वविषयनियमात् न च ता विप्रतिपत्तयो भवन्ति तद्वन्नयवादा इति। आह च[1]

[2]नैगमशब्दार्थानामेकानेकार्थनयगमापेक्षः।
देशसमग्रग्राही व्यवहारी नैगमो ज्ञेयः ॥ १ ॥
यत्संगृहीतवचनं सामान्ये देशतो [3]ऽथ च विशेषे† ।
तत्संग्रहनयनियतं ज्ञानं‡ विद्यान्नयविधिज्ञः ॥ २ ॥
समुदायव्यक्त्याकृतिसत्तासंज्ञादि[4]निश्चयापेक्षम् ।
[5]लोकोपचारनियतं व्यवहारं विस्तृतं विद्यात् ॥ ३ ॥

---

* K प्रतीयते।　　† H देशतो विशेषाच्च।　　‡ K adds च।

---

१ S संक्षिप्ततररुचीनामनुग्रहार्थमार्याभिर्वक्तुकाम एवं प्रक्रमत आह चेत्यादि आह चेत्यात्मानमेव पर्यायान्तरवर्तिनं निर्दिशति। H प्रयासः अभिहितमेवार्थं पूर्वाचार्यबद्धमतो ऽयमिति तत्संगृह्यार्याभिरुपप्रदर्शयन्नाह। आह चेत्यादि ॥

२ S निगमो जनपदस्तत्रभवा नैगमाः शब्दास्तेषामर्था अभिधेया अतस्तेषां नैगमशब्दार्थानां। एको विशेषः अनेकं सामान्यमनेकव्यक्त्याश्रितत्वात् तावेवार्थौ एकानेकार्थौ तयोरेकानेकार्थयोर्नयः प्रकटनं प्रकाशनमेकानेकार्थनयः स एव गमः प्रकारः एकानेकार्थनयगमस्तमपेक्षते ऽभ्युपैति यः स एकानेकार्थनयगमापेक्षः ॥ व्यवहारो ऽस्य सामान्यविशेषाभ्यां परस्परविमुखाभ्यामस्तीति व्यवहारी नैगमो नयो ज्ञातव्यः ॥

३ S अथ च = अथवा ॥

४ S संज्ञादयो नामस्थापनाद्रव्यभावाः।

५ S लोकोपचारे नियतं निष्पन्नं। उपचरितानुपचरितार्थाश्रयणाद्विस्तृतं।

साम्प्रतविषयग्राहकमृजुसूत्रनयं समासतो विद्यात् ।
विद्याद्यथार्थशब्दं विशेषितपदं तु शब्दनयम् ॥ ४ ॥ इति ॥

अत्राह । अथ जीवो नोजीवः अजीवो नोऽजीव इत्याकारिते केन नयेन कोऽर्थः प्रतीयत इति । अत्रोच्यते । जीव इत्याकारिते नैगमदेशसंग्रहव्यवहारर्जुसूत्रसाम्प्रतसमभिरूढैः पञ्चस्वपि गतिष्वन्यतमो जीव इति प्रतीयते । कस्मात् । एते हि नया जीवं प्रत्यौपशमिकादियुक्तभावग्राहिणः । नोजीव इत्यजीवद्रव्यं जीवस्य वा देशप्रदेशौ । अजीव इत्यजीवद्रव्यमेव । नोऽजीव इति जीव एव तस्य वा देशप्रदेशाविति ॥ एवम्भूतनयेन तु जीव इत्याकारिते भवस्थो जीवः प्रतीयते । कस्मात् । एष हि नयो जीवं प्रत्यौदयिकभावग्राहक एव । जीवतीति जीवः प्राणिति प्राणान्धारयतीत्यर्थः । तच्च* जीवनं सिद्धे न विद्यते तस्माद्भवस्थ एव जीव इति । नोजीव इत्यजीवद्रव्यं सिद्धो वा । अजीव इत्यजीवद्रव्यमेव । नोऽजीव इति भवस्थ एव जीव इति । समग्रार्थग्राहित्वाच्चास्य नयस्य नानेन देशप्रदेशौ गृह्येते । एवं जीवौ जीवा इति[1] द्वित्वबहुत्वाकारितेष्वपि । सर्वसंग्रहणे तु जीवो नोजीवः अजीवो नोऽजीवः जीवौ नोजीवौ अजीवौ नोऽजीवौ इत्येकद्वित्वाकारितेषु शून्यम् । कस्मात् । एष हि नयः संख्यानन्त्याज्जीवानां बहुत्वमेवेच्छति

* A नतु, E ननु ।

१ S इति शब्द आद्यर्थे ।

यथार्थग्राही* । शेषास्तु नया जात्यपेक्षमेकस्मिन्बहुवचनत्वं बहुषु च बहुवचनं [1]सर्वाकारितग्राहिण इति । एवं सर्वभावेषु नयवादाधिगमः कार्यः ।

अत्राह । अथ पञ्चानां ज्ञानानां सविपर्ययाणां कानि को नयः श्रयत इति । अत्रोच्यते । नैगमादयस्त्रयः सर्वाण्यष्टौ श्रयन्ते । ऋजुसूत्रनयो मतिज्ञानमत्यज्ञानवर्जानि षट् ॥ अत्राह । कस्मान्मतिं सविपर्ययां न श्रयत इति । अत्रोच्यते । श्रुतस्य सविपर्ययस्योपग्रहत्वात् । शब्दनयस्तु द्वे एव श्रुतज्ञानकेवलज्ञाने श्रयते । अत्राह । कस्मान्नेतराणि श्रयत इति । अत्रोच्यते । मत्यवधिमनःपर्यायाणां श्रुतस्यैवोपग्राहकत्वात् । चेतनाज्ञस्वाभाव्याच्च सर्वजीवानां नास्य कश्चिन्मिथ्यादृष्टिरज्ञो वा जीवो विद्यते । तस्मादपि विपर्ययाञ्च श्रयत इति । अतश्च प्रत्यक्षानुमानोपमानाप्तवचनानामपि प्रामाण्यमभ्यनुज्ञायत इति । आह च

विज्ञायैकार्थपदान्यर्थपदानि च विधानमिष्टं च ।
विन्यस्य परिक्षेपान्नयैः परीक्ष्याणि तत्त्वानि ॥ १ ॥
ज्ञानं सविपर्यासं त्रयः श्रयन्त्यादितो नयाः सर्वम् ।
सम्यग्दृष्टेर्ज्ञानं मिथ्यादृष्टेर्विपर्यासः ॥ २ ॥
ऋजुसूत्रः षट् श्रयते मतेः श्रुतोपग्रहादनन्यत्वात् ।
श्रुतकेवले तु शब्दः श्रयते नोऽन्यच्छ्रुताङ्गत्वात् ॥ ३ ॥

---

* S omits this.

---

१ सर्वाकारितग्राहिण इति सर्ववचनैरेकवचनादिभिराकारितानेतान्विकल्पान् गृह्णन्ति तच्छीलाश्च सर्वाकारितग्राहिण इति ॥

मिथ्यादृष्ट्यज्ञाने न श्रयते नास्य कश्चिदज्ञो* ऽस्ति ।
ज्ञस्वाभाव्याज्जीवो मिथ्यादृष्टिर्न चाप्यज्ञः ॥ ४ ॥
इति नयवादाश्चित्राः क्वचिद्विरुद्धा इवाथ च विशुद्धाः ।
लौकिकविषयातीतास्तत्त्वज्ञानार्थमधिगम्याः ॥ ५ ॥

इति तत्त्वार्थाधिगमेऽर्हत्प्रवचनसंग्रहे
प्रथमोऽध्यायः समाप्तः ॥

---

* Here and everywhere, Mss. BK give ष्मन्य for ष्मज्ञ० ।

# अथ द्वितीयोऽध्यायः ।

अत्राह । उक्तं भवता जीवादीनि तत्त्वानीति । तत्र को जीवः कथं लक्षणो वेति[१] । अत्रोच्यते ।

**औपशमिकक्षायिकौ भावौ मिश्रश्च जीवस्य स्वतत्त्वमौदयिकपारिणामिकौ च[२] ॥ १ ॥**

औपशमिकः क्षायिकः क्षायोपशमिक औदयिकः पारिणामिक इत्येते पञ्च भावा जीवस्य स्वतत्त्वं भवन्ति ।

**द्विनवाष्टादशैकविंशतित्रिभेदा यथाक्रमम् ॥ २ ॥**

एते औपशमिकादयः पञ्च भावा द्विनवाष्टादशैकविंशतित्रिभेदा भवन्ति । तद्यथा* । औपशमिको द्विभेदः क्षायिको नवभेदः क्षायोपशमिको ऽष्टादशभेदः औदयिक एकविंशतिभेदः पारिणामिकस्त्रिभेद इति । यथाक्रममिति येन सूत्रक्रमेणात ऊर्ध्वं वक्ष्यामः† ।

**सम्यक्त्वचारित्रे ॥ ३ ॥**

सम्यक्त्वं चारित्रं च द्वावौपशमिकौ भावौ भवत इति ।

**ज्ञानदर्शनदानलाभभोगोपभोगवीर्याणि च ॥ ४ ॥**

---

* K यथाक्रमम् A यथा ।     † K adds तद्यथा ।

१ S वा = and.     २ S च शब्दात्सान्निपातिकः ।

ज्ञानं दर्शनं दानं लाभो भोग उपभोगो वीर्यमित्येतानि च* सम्यक्त्वचारित्रे च नव क्षायिका भावा भवन्तीति।

**ज्ञानाज्ञानदर्शनदानादिलब्धयश्चतुस्त्रित्रिपञ्चभेदाः सम्यक्त्वचारित्रसंयमासंयमाश्च ॥ ५ ॥**

ज्ञानं चतुर्भेदं मतिज्ञानं श्रुतज्ञानमवधिज्ञानं मनःपर्यायज्ञानमिति। अज्ञानं त्रिभेदं मत्यज्ञानं श्रुताज्ञानं विभङ्गज्ञानमिति। दर्शनं त्रिभेदं चक्षुर्दर्शनमचक्षुर्दर्शनमवधिदर्शनमिति। लब्धयः पञ्चविधा दानलब्धिर्लाभलब्धिर्भोगलब्धिरुपभोगलब्धिर्वीर्यलब्धिरिति। सम्यक्त्वं चारित्रं संयमासंयम इत्येते ऽष्टादश क्षायौपशमिका भावा भवन्तीति।

**गतिकषायलिङ्गमिथ्यादर्शनाज्ञानासंयतासिद्धत्वलेश्याश्चतुश्चतुस्त्र्येकैकैकैकषड्भेदाः ॥ ६ ॥**

गतिश्चतुर्भेदा नारकतैर्यग्यो†नमनुष्यदेवा इति। कषायश्चतुर्भेदः क्रोधी मानी मायी लोभीति[१]। लिङ्गं त्रिभेदं स्त्री‡ पुमान्नपुंसकमिति। मिथ्यादर्शनमेकभेदं मिथ्यादृष्टिरिति। अज्ञानमेकभेदमज्ञानीति। असंयतत्वमेकभेदमसंयतो ऽविरत इति। असिद्धत्वमेकभेदमसिद्ध इति। एकभेदमेकविधमिति। लेश्याः षड्भेदाः कृष्णलेश्या नीललेश्या कापोतलेश्या तेजो-

---

* KC omits च। † K तिर्यग्योन०। ‡ K puts पुमान् before स्त्री।

१ S कषः संसारस्तस्याय उपादानकारणाविशेषः कषायः। स चतुर्धा क्रोधादिस्तदुदयात्क्रोध्यादिव्यपदेशः। अत्रापि जीवस्वतत्त्वप्रतिपत्तये क्रोधीति व्यपदेशो न क्रोध इति।

लेश्या पद्मलेश्या शुक्ललेश्या । इत्येते एकविंशतिरौदयिक*-भावा भवन्ति ।

## जीवभव्याभव्यत्वादीनि च ॥ ७ ॥

जीवत्वं भव्यत्वमभव्यत्वमित्येते त्रयः पारिणामिका भावा भवन्तीति । आदिग्रहणं किमर्थमिति । अत्रोच्यते । अस्तित्व-मन्यत्वं कर्तृत्वं भोक्तृत्वं गुणवत्त्वमसर्वगतत्वमनादिकर्मसन्तानबद्धत्वं प्रदेशत्व†मरूपत्वं‡ नित्यत्वमित्येवमादयो ऽप्यनादिपारिणामिका जीवस्य भावा भवन्ति । धर्मादिभिस्तु समाना इत्यादिग्रहणेन सूचिताः । ये जीवस्यैव वैशेषिकास्ते स्वशब्देनोक्ता इति । एते पञ्च भावास्त्रिपञ्चाशद्भेदा जीवस्य स्वतत्त्वं भवन्ति । अस्तित्वाद-यश्च§ । किं चान्यत् ।

## उपयोगो लक्षणम् ॥ ८ ॥

उपयोगो लक्षणं जीवस्य भवति ।

## स॥ द्विविधो ऽष्टचतुर्भेदः ॥ ९ ॥

स॥ उपयोगो द्विविधः साकारो ऽनाकारश्च ज्ञानोपयोगो दर्शनोपयोगश्चेत्यर्थः । स पुनर्यथासङ्ख्यमष्टचतुर्भेदो भवति ।

---

* S probably omits औदयिक K औदयिका भावा ।

† K प्रदेशवत्वं ।   ‡ KB ०रूपित्वम् ।   § K omits.

|| Var S omits. S says this is wrong, and in arguing says "यत्र भेदविधिः तत्र तच्छब्दो न प्रयुज्यते इति कः खलु नियमः" and further quotes VI 2 and VIII 2 in support of his argument.

ज्ञानोपयोगोऽष्टविधः । तद्यथा । मतिज्ञानोपयोगः श्रुतज्ञानोपयोगोऽवधिज्ञानोपयोगो मनःपर्यायज्ञानोपयोगः केवलज्ञानोपयोगो मत्यज्ञानोपयोगः श्रुताज्ञानोपयोगो विभङ्गज्ञानोपयोग इति । दर्शनोपयोगश्चतुर्भेदः । तद्यथा । चक्षुर्दर्शनोपयोगोऽचक्षुर्दर्शनोपयोगोऽवधिदर्शनोपयोगः केवलदर्शनोपयोग इति ॥

### संसारिणो मुक्ताश्च ॥ १० ॥

ते जीवाः समासतो द्विविधा भवन्ति संसारिणो मुक्ताश्च । किं चान्यत् ।

### समनस्कामनस्काः ॥ ११ ॥

समासतस्ते एव जीवा द्विविधा भवन्ति समनस्काश्च अमनस्काश्च । तान्परस्ताद्वक्ष्यामः* ॥

### संसारिणस्त्रसस्थावराः ॥ १२ ॥

संसारिणो जीवा द्विविधा भवन्ति त्रसाः स्थावराश्च । तत्र

### पृथिव्यब्वनस्पतयः स्थावराः ॥ १३ ॥

पृथिवीकायिका अप्कायिका वनस्पतिकायिका इत्येते त्रिविधाः स्थावरा जीवा भवन्ति । तत्र पृथिवीकायोऽनेकविधः शुद्धपृथिवीशर्करावालुकादिः । अप्कायोऽनेकविधो हिमादिः । वनस्पतिकायोऽनेकविधः शैवलादिः ॥

### तेजोवायू द्वीन्द्रियादयश्च त्रसाः ॥ १४ ॥

---

* II. 25.

तेजःकायिका अङ्गारादयः। वायुकायिका उत्कलिकादयः। द्वीन्द्रियास्त्रीन्द्रियाश्चतुरिन्द्रियाः पञ्चेन्द्रिया इत्येते त्रसा भवन्ति। संसारिणस्त्रसाः स्थावरा इत्युक्ते एतदुक्तं भवति मुक्ता नैव त्रसा नैव स्थावरा इति॥

## पञ्चेन्द्रियाणि ॥ १५ ॥

पञ्चेन्द्रियाणि* भवन्ति। आरम्भो नियमार्थः षडादिप्रतिषेधार्थश्च॥ इन्द्रियं। इन्द्रलिङ्गमिन्द्रदिष्टमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिति† वा। इन्द्रो जीवः सर्वद्रव्येष्वैश्वर्ययोगाद्विषयेषु वा परमैश्वर्ययोगात्। तस्य लिङ्गमिन्द्रियं लिङ्गनात्सूचनात्प्रदर्शनादुपष्टम्भनाद्व्यञ्जनाच्च‡ जीवस्य लिङ्गमिन्द्रियम्॥

## द्विविधानि ॥ १६ ॥

द्विविधानीन्द्रियाणि भवन्ति। द्रव्येन्द्रियाणि भावेन्द्रियाणि च॥ तत्र

## निर्वृत्त्युपकरणे द्रव्येन्द्रियम् ॥ १७ ॥

निर्वृत्तीन्द्रियमुपकरणेन्द्रियं च द्विविधं द्रव्येन्द्रियम्। निर्वृत्तिरङ्गोपाङ्गनामनिर्वर्तितानीन्द्रियद्वाराणि[१] कर्मविशेष-

* K पञ्चैवेन्द्रियाणि भवन्तीत्या०।

† B adds इन्द्रदत्तम्, C adds इन्द्रसृष्टम् K adds इन्द्रदत्तं last and omits इन्द्रदृष्टं।

‡ B adds लवनात् and puts उपलम्भनात् for उपष्टंभनात् K gives उपलम्भनात् for जुष्टं and व्यञ्जनात् for दत्तम्। § K निर्वृत्ति।

१ S अङ्गोपाङ्गनाम निर्माणकर्म चाभ्यां कर्मविशेषाभ्यां......विशिष्टावयवरचनया निष्पादिता......प्रतिविशिष्टदेशाः प्रदेशाः।

संस्कृताः शरीरप्रदेशाः। निर्माणनामाङ्गो*पाङ्गप्रत्यया[१] मूलगुणनिर्वर्तनेत्यर्थः॥ उपकरणं बाह्यमभ्यन्तरं च। निर्वर्तितस्यानुपघातानुग्रहाभ्यामुपकारीति॥

## लब्ध्युपयोगौ भावेन्द्रियम्॥ १८॥

लब्धिरुपयोगश्च भावेन्द्रियं भवति। लब्धिर्नाम गतिजात्यादिनामकर्मजनिता तदावरणीयकर्मक्षयोपशमजनिता चेन्द्रियाश्रयकर्मोदयनिर्वृत्ता च† जीवस्य भवति। सा पञ्चविधा। तद्यथा। स्पर्शनेन्द्रियलब्धिः रसनेन्द्रियलब्धिः घ्राणेन्द्रियलब्धिः चक्षुरिन्द्रियलब्धिः श्रोत्रेन्द्रियलब्धिरिति॥

## उपयोगः स्पर्शादिषु‡॥ १९॥

स्पर्शादिषु मतिज्ञानोपयोग इत्यर्थः। उक्तमेतदुपयोगो लक्षणम्§। उपयोगः प्रणिधानमायोग||स्तद्भावः परिणाम इत्यर्थः॥ एषां च सत्यां निर्वृत्तावुपकरणोपयोगौ भवतः। सत्यां च¶ लब्धौ निर्वृत्त्युपकरणोपयोगा भवन्ति। निर्वृत्त्यादीनामेकतराभावे विषयालोचनं न भवति।

---

* K omits पाङ्ग। † KB वा।

‡ S says: some doubt whether this is a sutra, but he adds, their view is wrong. K margin टीकाकारमते सूत्रमिदं केषांचिन्मते भाष्यमेवैतदिति।

§ II. 8. || K स्वयोगः। ¶ S probably omits च।

---

[१] S मध्यव्यवस्थितो नामशब्द उभयं विशेषतयाक्षिप्यति।......ते कर्मणी प्रत्ययं कारणं निमित्तं यस्या निर्वृत्तेः सा निर्माणनामाङ्गोपाङ्गप्रत्यया।

अत्राह। उक्तं भवता पञ्चेन्द्रियाणीति[*]। तत्कानि तानीन्द्रियाणीत्युच्यते।

**स्पर्शनरसनघ्राणचक्षुःश्रोत्राणि ॥ २० ॥**

स्पर्शनं रसनं घ्राणं चक्षुः श्रोत्रमित्येतानि पञ्चेन्द्रियाणि॥

**स्पर्शरसगन्धवर्णशब्दास्तेषामर्थाः ॥ २१ ॥**

एतेषामिन्द्रियाणामेते स्पर्शादयोऽर्था भवन्ति यथासङ्ख्यम्॥

**श्रुतमनिन्द्रियस्य ॥ २२ ॥**

श्रुतज्ञानं द्विविधमनेकद्वादशविधं नोइन्द्रियस्यार्थः।

अत्राह। उक्तं भवता पृथिव्यब्वनस्पतितेजोवायवो द्वीन्द्रियादयश्च[†] नव जीवनिकायाः। पञ्चेन्द्रियाणि[‡] चेति। तत्किं कस्येन्द्रियमिति। अत्रोच्यते।

**वाय्वन्तानामेकम् ॥ २३ ॥**

पृथिव्यादीनां वाय्वन्तानां जीवनिकायानामेकमेवेन्द्रियं सूत्रक्रमप्रामाण्यात्प्रथमं स्पर्शनमेवेत्यर्थः।

**कृमिपिपीलिकाभ्रमरमनुष्यादीनामेकैकवृद्धानि[§]॥२४॥**

कृम्यादीनां पिपीलिकादीनां भ्रमरादीनां मनुष्यादीनां च यथासङ्ख्यमेकैकवृद्धानीन्द्रियाणि भवन्ति। यथाक्रमम्। तद्यथा। कृम्यादीनां अपादिक-नूपुरक-गण्डूपद-शङ्ख-शुक्तिका शम्बूका-

---

* II. 15. † II. 13, 14. ‡ II. 15.

§ Var S omits मनुष्यादीनाम्।

जलुका-प्रभृतीनामेकेन्द्रियेभ्यः पृथिव्यादिभ्य एकेन वृद्धे स्पर्शनरसनेन्द्रिये भवतः। ततो ऽप्येकेन वृद्धानि पिपीलिका-रोहिणिका-उपचिका-कुन्थु-तुबुरक-त्रपुसबीज-कर्पासास्थिका-शतपद्युत्पतक-तृणपत्र-काष्ठहारकप्रभृतीनां त्रीणि स्पर्शनरसनघ्राणानि। ततो ऽप्येकेन वृद्धानि भ्रमर-वटर*-सारङ्ग-मक्षिका-पुत्तिका†-दंश-मशक-वृश्चिक-नन्द्यावर्त-कीट-पतङ्गादीनां चत्वारि स्पर्शनरसनघ्राणचक्षूंषि। शेषाणां च तिर्यग्योनिजानां मत्स्योरग-भुजङ्ग-पक्षि-चतुष्पदानां सर्वेषां च नारकमनुष्यदेवानां पञ्चेन्द्रियाणीति‡ ॥

अत्राह। उक्तं भवता द्विविधा जीवाः। समनस्का अमनस्काश्चेति§। तत्र के समनस्का इति। अत्रोच्यते।

## संज्ञिनः समनस्काः ॥ २५ ॥

संप्रधारणसंज्ञायां संज्ञिनो जीवाः समनस्का भवन्ति। सर्वे नारकदेवा गर्भव्युत्क्रान्तयश्च मनुष्यास्तिर्यग्योनिजाश्च केचित् ॥ ईहापोहयुक्ता गुणदोषविचारणात्मिका संप्रधारणसंज्ञा। तां प्रति संज्ञिनो विवक्षिताः। अन्यथा ह्याहारभयमैथुनपरिग्रहसंज्ञाभिः सर्व एव जीवाः संज्ञिन इति ॥

## विग्रहगतौ कर्मयोगः‖ ॥ २६ ॥

विग्रहगतिसमापन्नस्य जीवस्य कर्मकृत एव योगो भवति।

---

* K वरट। † K B युंतिका।

‡ Var S adds here as a sutra अतीन्द्रियाः केवलिनः।

§ II. 11. ‖ C कर्मयोगम्।

कर्मशरीरयोग इत्यर्थः । अन्यत्र तु यथोक्तः कायवाग्मनोयोग इत्यर्थः ॥

**अनुश्रेणि गतिः ॥ २७ ॥**

सर्वा गतिर्जीवानां पुद्गलानां चाकाशप्रदेशानुश्रेणि भवति विश्रेणिर्न भवतीति गतिनियम इति* ।

**अविग्रहा जीवस्य ॥ २८ ॥**

सिध्यमान†गतिर्जीवस्य नियतमविग्रहा भवतीति ।

**विग्रहवती च संसारिणः प्राक् चतुर्भ्यः ॥ २९ ॥**

जात्यन्तरसंक्रान्तौ संसारिणो जीवस्य विग्रहवती चाविग्रहा च गतिर्भवति उपपातक्षेत्रवशात् । तिर्यगूर्ध्वमधश्च प्राक् चतुर्भ्य इति । येषां विग्रहवती तेषां विग्रहाः प्राक् चतुर्भ्यो भवन्ति । अविग्रहा एकविग्रहा द्विविग्रहा‡ त्रिविग्रहा इत्येता§श्चतुःसमयपराश्चतुर्विधा गतयो भवन्ति । परतो न संभवन्ति । प्रतिघाताभावाद्विग्रहनिमित्ताभावाच्च । विग्रहो वक्रितं विग्रहोऽवग्रहः श्रेण्यन्तरसंक्रान्तिरित्यनर्थान्तरम् । पुद्गलानामप्येवमेव ॥

शरीरिणां|| च¶ जीवानां विग्रहवती चाविग्रहवती** च प्रयोगपरिणामवशात् । न तु तत्र विग्रहनियम इति ॥

अत्राह । अथ विग्रहस्य किं परिमाणमिति । अत्रोच्यते । क्षेत्रतो भाज्यम् । कालतस्तु

---

* A omits इति ।  † K B सिद्धमानस्य ।  ‡ C द्विविग्रहास्ति ।
§ S probably एवम् for इति ।  || B शारीरिणाम् ।
¶ Mss. omits च ।  **• A omits K चाविग्रहा ।

## एकसमयो ऽविग्रहः ॥ ३० ॥

एकसमयो ऽविग्रहो भवति । अविग्रहा गति*रालोकान्तादप्येकेन समयेन भवति । एकविग्रहा द्वाभ्याम् । द्विविग्रहा त्रिभिः । त्रिविग्रहा चतुर्भिरिति । अत्र भङ्गप्ररूपणा कार्येति ॥

## एकं द्वौ वानाहारकः ॥ ३१ ॥

विग्रहगतिसमापन्नो जीव एकं वा समयं द्वौ वा समयावनाहारको भवति । शेषं कालमनुसमयमाहारयति । कथमेकं द्वौ वानाहारको न बहूनीत्यत्र भङ्गप्ररूपणा कार्या ॥

अत्राह । एवमिदानीं भवक्षये जीवो ऽविग्रहया विग्रहवत्या वा गत्या गतः कथं पुनर्जायत† इति अत्रोच्यते । उपपातक्षेत्रं स्वकर्मवशात्प्राप्तः शरीरार्थं पुद्गलग्रहणं करोति । सकषायत्वाज्जीवः कर्मणो योग्यान्पुद्गलानादत्ते‡ इति । कायवाङ्मनःप्राणापानाः पुद्गलानामुपकारः§ । नामप्रत्ययाः‖ सर्वतो योगविशेषादिति¶ वक्ष्यामः । तज्जन्म । तच्च त्रिविधम् । तद्यथा ।

## संमूर्छनगर्भोपपाता** जन्म ॥ ३२ ॥

संमूर्छनं गर्भ उपपात इत्येतत्त्रिविधं जन्म ।

## सचित्तशीतसंवृत्ताः सेतरा मिश्राश्चैकशस्तद्योनयः॥३३॥

संसारे जीवानामस्य त्रिविधस्य जन्मन एताः सचित्तादयः

---

* K सविग्रहगतिरा० । † K ज्ञायते । ‡ VIII. 2.

§ V. 19. ‖ KB नामप्रत्ययात्स० ।

¶ VIII. 24. ** KB ०पाताज्जन्म ।

सप्रतिपक्षा मिश्राश्चैकशो योनयो भवन्ति । तद्यथा । सचित्ता अचित्ता सचित्ताचित्ता शीता उष्णा शीतोष्णा संवृत्ता विवृत्ता संवृत्तविवृत्ता इति । तत्र देवनारका*नामचित्ता योनिः । गर्भजन्मनां मिश्रा । त्रिविधान्येषाम् ॥ गर्भजन्मनां देवानां च शीतोष्णा । तैजःकायस्योष्णा । त्रिविधान्येषाम् ॥ नारकैकेन्द्रिय-देवानां संवृत्ता । गर्भजन्मनां मिश्रा । विवृत्तान्येषामिति ॥

## जराय्वण्डपोतजानां गर्भः† ॥ ३४ ॥

जरायुजानां मनुष्य-गो-महिषा‡जाविकाश्व-खरोष्ट्र-मृग-चमर-वराह-गवय-सिंह-व्याघ्रर्क्ष-द्वीपि-श्व§-शृगाल मार्जारादीनाम् । अण्डजानां सर्प-गोधा-कृकलास-गृहकोकिलिका‖-मत्स्य-कूर्म-नक्र-शिशुमारादीनां¶ पक्षिणां च लोमपक्षाणां** हंस-चाष-शुक-गृध्र-श्येन-पारापत-काक-मयूर-मद्गु-बक-बलाकादीनां । पोतजानां शल्लक††-हस्ति-श्वाविल्लापक‡‡-शशशारिका-नकुल-मूषिकादीनां पक्षिणां च चर्मपक्षाणां§§ जलुका-‖‖वल्गुलि-भारण्ड पक्षिविरालादीनां¶¶ गर्भो ***जन्मेति ॥

## नारकदेवानामुपपातः ॥ ३५ ॥

* KA नारकदेवाना० । † Var S जराय्वण्डजपोतानां गर्भः ।
‡ B महिष्यजाविका० । § A श्व K द्वीपिक-शृ० ।
‖ K गृहगोलिका । ¶ KB सिप्रमार । ** Var S पक्षिणाम् ।
†† C सल्लकहस्तिस्वाविल्लाचक ससारिका ।
‡‡ B श्वासहाविल्लापक K श्वसेहाविल्लापक । §§ Var S पक्षिणाम् ।
‖‖ K जल्लुका वल्गुलि H जल्लुका । ¶¶ C पिडालादीनां ।
*** K B गर्भाज्जन्मति ।

नारकाणां देवानां चोपपातो जन्मेति ।

## शेषाणां संमूर्छनम् ॥ ३६ ॥

जराय्वण्डपोतजनारकदेवेभ्यः शेषाणां संमूर्छनं जन्म । उभयावधारणं चात्र* भवति । जरायुजादीनामेव† गर्भः । गर्भ एव जरायुजादीनाम्‡ । नारकदेवानामेवोपपातः । उपपात एव नारकदेवानाम् । शेषाणामेव संमूर्छनम् । संमूर्छनमेव शेषाणाम् ॥

## औदारिकवैक्रियाहारकतैजसकार्मणानि शरीराणि[1] ॥ ३७ ॥

औदारिकं वैक्रियं आहारकं तैजसं कार्मणमित्येतानि पञ्च शरीराणि संसारिणां जीवानां भवन्ति ।

## §तेषां परं परं सूक्ष्मम् ॥ ३८ ॥

तेषामौदारिकादिशरीराणां परं परं सूक्ष्मं[2] वेदितव्यम् । तद्यथा । औदारिकाद्वैक्रियं सूक्ष्मम् । वैक्रियादाहारकम् । आहारकात्तैजसम् । तैजसात्कार्मणमिति ॥

## प्रदेशतो ऽसङ्ख्येयगुणं प्राक् तैजसात् ॥ ३९ ॥

तेषां शरीराणां परं परमेव प्रदेशतो[3] ऽसङ्ख्येयगुणं भवति

---

* BK omit अत्र । † K जराय्वादीनामेव । ‡ K जराय्वादीनाम् ।
§ Some Mss. omit तेषाम् । H omits, but places it after the सूत्र । तेषामौदा ।

---

१ S अत्र केचित्सूत्रावयवमविच्छिद्य शरीराणीति पृथक् सूत्रं कल्पयन्ति ।
२ S स्वल्पाकाशप्रदेशावगाहीति ।
३ S अनन्ताणुस्कन्धः प्रदेशोऽत्राभिधीयते ।

प्राक् तैजसात्। औदारिकशरीरप्रदेशेभ्यो वैक्रियशरीरप्रदेशा असङ्ख्येयगुणाः। वैक्रियशरीरप्रदेशेभ्य आहारकशरीरप्रदेशा असङ्ख्येयगुणा इति॥

## अनन्तगुणे परे॥ ४०॥

परे द्वे शरीरे तैजसकार्मणे पूर्वतः पूर्वतः* प्रदेशार्थतयानन्तगुणे भवतः। आहारकात्तैजसं प्रदेशतोऽनन्तगुणम्। तैजसात्कार्मणमनन्तगुणमिति।

## अप्रतिघाते॥ ४१॥

एते द्वे शरीरे तैजसकार्मणे अन्यत्र लोकान्तात्सर्वत्राप्रतिघाते भवतः।

## अनादिसंबन्धे† च॥ ४२॥

ताभ्यां तैजसकार्मणाभ्यामनादिसंबन्धो जीवस्येत्यनादिसंबन्ध इति।

## सर्वस्य॥ ४३॥

सर्वस्य चैते तैजसकार्मणे शरीरे संसारिणो जीवस्य भवतः। एके त्वाचार्या नयवादापेक्षं व्याचक्षते। कार्मणमेवैकमनादिसंबन्धम्‡। तेनैवैकेन जीवस्यानादिः संबन्धो§ भवतीति। तैजसं तु लब्ध्यपेक्षं भवति। सा च तैजसलब्धिर्न सर्वस्य कस्यचिदेव भवति। क्रोध‖प्रसादनिमित्तौ शापानुग्रहौ प्रति तेजोनिसर्गशीतरश्मिनिसर्गकरं तथा भ्राजिष्णुप्रभासमुदयच्छायानिर्वर्तकं तैजसं¶ शरीरेषु मणिज्वलनज्योतिष्कविमानवदिति।

---

* K पूर्वतः once. † P संबद्धे। ‡ C संबन्धि।
§ K जीवस्यानादिसंबन्धः। ‖ HC कोप। ¶ K omits तैजसं।

**तदादीनि भाज्यानि युगपदेकस्या चतुर्भ्यः ॥ ४४ ॥**

ते[1] आदिनी एषामिति तदादीनि । तैजसकार्मणे यावत्संसारभाविनी आदिं[*] कृत्वा शेषाणि युगपदेकस्य जीवस्य

* C आदि ।

S [1]ते आदिनी इत्यादि भाष्यं प्रस्तुततैजसकार्मणे तच्छब्देनाभिसंबध्यते । ते आदिनी एषामौदारिकादीनां मेढिभूते व्यवस्थिते तानि तदादीनि समुदायसमासार्थः । एतदेव स्पष्टतरं करोति । तैजसकार्मणे यावत्संसारभाविनी आदिं कृत्वा यावत्संसारं भवितुं शीलमनयोस्ते संसारभाविनी तैजसकार्मणे आदिं कृत्वा मेढीभूततया व्यवस्थाप्य शेषाण्यौदारिकादीनि एकस्मिन्काले एकजीवस्य भाज्यानि विकल्प्यानि आचतुर्भ्य इति यावच्चत्वारि युगपदेकजीवस्य भवन्त्यप्रत्याख्यानपक्षे अथैकीयमतेन तैजसं प्रत्याख्यानं तथा त्रीणि युगपदेकस्य स्युः । आचार्यस्याभिप्रायः कार्मणं च तैजसं आश्रयः सर्वदा सर्वस्यास्ति । अतस्ते आदिनी एषामिति विग्रहः कृतवान् । ये तु प्रत्याचक्षते तेषां विग्रहः तत् आदि कार्मणमेषां तानीमानि तदादीनि । उभयथा च भाष्यं भविष्यति । आचार्यस्य तु विग्रहगतौ कर्मकृत एव योगो भवति न तु तैजसमित्यत्रैव लब्ध्यापेक्षत्वात्तत्किल नास्ति । तस्यामवस्थायाम् । अन्यत्र त्वाचार्यस्य तैजसं सर्वत्रास्ति । तामिदानीमात्माभिप्रायानुसारिणीं भजनां दर्शयन्नाह तद्यथेत्यादिना । अन्तर्गतौ तैजसकार्मणे

केवले स्तः। इह तु तैजसमाश्रितमाचार्येण विग्रहगताविल्यत्र पराभिप्रायेण नाश्रितम्॥ भवस्थतायामेते चौदारिकं चेति त्रीणि युगपत्। अथवा एते च वैक्रियं चेति त्रीणि। तिर्यङ्मनुष्याणां तैजसकार्मणौदारिकैः सह लब्धिप्रत्ययवैक्रियशरीरसद्भावे युगपदविच्छिन्नप्रदेशत्वाच्चत्वारि। चतुर्दशपूर्वधरमनुष्यस्याहारकलब्धौ सत्यां तैजसकार्मणौदारिकैः सह युगपदेवं चत्वारि पद्मनालतन्तुवदेव चाविच्छेदेनैकजन्मप्रदेशैश्चतुष्टयमपि प्रतिबद्धमवसेयम्॥ एवमेतान्पञ्च विकल्पान्स्वमते प्रदर्श्याधुना एकीयमतमादर्शयितुमाह। कार्मणमेव वा स्यात्। न ह्यन्तर्गतौ लब्धिप्रत्ययं तैजसमस्ति लब्धेर्मृतावेव प्रच्यवनात्। अतः कार्मणमेवैकमिति प्रथमो विकल्पः। कार्मणतैजसे वा स्यातामित्ययमत्रानुपपन्नो विकल्पः। हेर्या तु भाष्येष्वधीतः। कथं। यैः प्रत्याख्यातं सहजं तैजसं तेषां कुतो ऽन्तर्गतौ तत्संभवः। न चान्यावस्था भवस्थतायामस्ति यत्रोभयमेव स्यात्। अनुत्पन्नतैजसवैक्रियलब्धेः कार्मणौदारिके द्वे भवतः। अथवा कार्मणवैक्रिये देवनारकाणां। तिर्यङ्मनुष्याणामनुत्पन्नतैजसलब्धीनां कार्मणौदारिकवैक्रियाणि युगपत्। अनुत्पन्नतैजसवैक्रियलब्धेश्चतुर्दशपूर्वधरमनुष्यस्य कार्मणौदारिकाहारकाणि वा। उत्पन्नलब्धीनां नृतिरश्चां कार्मणतैजसौदारिकवैक्रियाणि युगपच्चत्वारि भवन्ति। चतुर्दशपूर्वधरमनुष्यस्यानुत्पन्नवैक्रियलब्धेः कार्मणतैजसौदारिकाहारकाणि युगपत्। एवमेते ऽन्याचार्यदर्शनेन सप्त विकल्पाः संभवन्ति॥

भाज्यान्या चतुर्भ्यः। तद्यथा। तैजसकार्मणे वा स्याताम्। तैजसकार्मणौदारिकाणि वा स्युः। तैजसकार्मणवैक्रियाणि वा स्युः। तैजसकार्मणौदारिकवैक्रियाणि वा स्युः। तैजसकार्मणौदारिकाहारकाणि वा स्युः॥ कार्मणमेव वा स्यात्*। कार्मणौदारिके वा स्याताम्। कार्मणवैक्रिये वा स्याताम्। कार्मणौदारिकवैक्रियाणि वा स्युः। कार्मणौदारिकाहारकाणि वा स्युः। कार्मणतैजसौदारिकवैक्रियाणि वा स्युः। कार्मणतैजसौदारिकाहारकाणि वा स्युः। न तु† कदाचिद्युगपत्पञ्च भवन्ति। नापि वैक्रियाहारके युगपद्भवतः स्वामिविशेषादिति वक्ष्यते॥

## निरुपभोगमन्त्यम्॥ ४५॥

अन्त्यमिति सूत्रक्रमप्रामाण्यात्कार्मणमाह। तन्निरुपभोगम्। न सुखदुःखे तेनोपभुज्येते न तेन कर्म बध्यते न वेद्यते नापि निर्जीर्यत इत्यर्थः॥ शेषाणि तु सोपभोगानि। यस्मात्सुखदुःखे तैरुपभुज्येते कर्म‡ बध्यते वेद्यते निर्जीर्यते च तस्मात्सोपभोगानीति॥

अत्राह। एषां पञ्चानामपि शरीराणां संमूर्छनादिषु त्रिषु§ जन्मसु किं क्व जायत इति। अत्रोच्यते।

## गर्भसंमूर्छनजमाद्यम्॥ ४६॥

आद्यमिति सूत्रक्रमप्रामाण्यादौदारिकमाह। तद्गर्भे संमूर्छने वा जायते।

* Some Mss. add कार्मणतैजसे वा स्याताम्।
† K च for तु। ‡ K adds च। § KB त्रिजन्मसु।

वैक्रियमौपपातिकम् ॥ ४७ ॥

वैक्रियशरीरमौपपातिकं भवति । नारकाणां देवानां चेति* ।

लब्धिप्रत्ययं च ॥ ४८ ॥

लब्धिप्रत्ययं च वैक्रियशरीरं† भवति । तिर्यग्योनीनां मनुष्याणां चेति ।

शुभं विशुद्धमव्याघाति चाहारकं चतुर्दशपूर्वधरस्यैव‡ ॥ ४९ ॥

शुभमिति शुभद्रव्योपचितं शुभपरिणामं चेत्यर्थः । विशुद्धमिति विशुद्धद्रव्योपचितमसावद्यं चेत्यर्थः । अव्याघातीति आहारकं शरीरं न व्याहन्ति न व्याहन्यते चेत्यर्थः । तच्चतुर्दशपूर्वधर एव कस्मिंश्चिदर्थे कृच्छ्रे ऽत्यन्तसूक्ष्मे संदेहमापन्नो निश्चयाधिगमार्थं क्षेत्रान्तरितस्य भगवतो ऽर्हतः पादमूल§मौदारिकेण शरीरेणाशक्यगमनं‖ मत्वा लब्धिप्रत्ययमेवोत्पादयति दृष्ट्वा¶ भगवन्तं छिन्नसंशयः पुनरागत्य व्युत्सृजत्यन्तर्मुहूर्तस्य ॥

तैजसमपि[१] शरीरं लब्धिप्रत्ययं भवति ॥

* K omits च । † K वैक्रियं शरीरं । ‡ A ०धर एव । § C मूले । ‖ K अशक्यं गन्तुमिति मत्वा । ¶ K adds च ।

१ This is marked as a separate sutra by Mss. Bhandakar does the same. But S does not do so. H considers this to be a sūtra तैजसमपि ॥ तैजसं शरीरं ।

S अथ तैजसकार्मणे कस्मिन् जन्मनि समुद्भवत इति नानयोर्नियमः सर्वत्राप्रतिहतशक्तित्वात्सर्वजन्मसु सह तैजसं कार्मणं वा

कार्मणमेषां निबन्ध*माश्रयो भवति । तत्कर्मत एव भवतीति बन्धे परस्ताद्वक्ष्यति । कर्म हि कार्मणस्य कारणमन्येषां च शरीराणामादित्यप्रकाशवत् ॥ यथादित्यः स्वमा-

* K निबन्धनमा० । † VIII.

स्यात् । तनुलब्धि तैजसमतो लब्धिप्रस्तावमुपजीवन्भाष्यकारस्तैजसमपीत्याह । तेजोविकारस्तैजसं सर्वस्योष्णलक्षणं रसाद्याहारपाकजननमेतच्चावश्यं सर्वप्राणिविषयमभ्युपगन्तव्यमन्यथा शरीरपदे तैजसशरीराणि बद्धान्यनन्तानि अनन्तोत्सर्पिण्यवसर्पिणीसमयराशिसमसङ्ख्यानि कालतः क्षेत्रतोऽनन्ता लोका द्रव्यतः सिद्धेभ्योऽनन्तगुणानि सर्वजीवानन्तभागोनानि । किं पुनः कारणमनन्तानि तत्स्वामिनामानन्त्यादित्येष ग्रन्थः सर्वो विघटेत । लब्धिप्रत्यय एवाङ्गीक्रियमाणे तैजसवपुष्यतो विद्यमानमपि सर्वासुमत्सु सहजमनादृत्य तैजसं लब्ध्यधिकारे लब्धिप्रत्ययमेवाचष्टे नेतरदिति तैजसं शरीरं तैजसशरीरलब्धिकारणमुद्भूतशक्ति भवति तपोविशेषानुष्ठानात्कस्यचिदेव जातुचिन्न सर्वस्येति ॥

॥ तैजसमपीति सूत्रं संबन्धः प्रतीतः समुदायार्थं वा । अवयवार्थमाह तैजसमित्यादिना तैजसमपि शरीरं प्राङ्निर्दिष्टस्वरूपं किमित्याह लब्धिप्रत्ययं लब्धिनिमित्तं भवति लब्धिनिमित्तमपि न तु लब्धिनिमित्तमेव कार्मणभेदस्योष्णलक्षणस्य रसाद्याहारपाकजनकस्य भावादिति ॥

त्मानं प्रकाशयत्यन्यानि च द्रव्याणि न चास्यान्यः प्रकाशकः* । एवं कार्मणमात्मनश्च† कारणमन्येषां च शरीराणामिति ॥

अत्राह । औदारिकमित्येतदादीनां शरीरसंज्ञानां कः पदार्थ इति । अत्रोच्यते । उद्गतारमुदारम् । उत्कटार‡मुदारम् । उद्गम एव §वोदारम् । उपादानात्प्रभृति अनुसमयमुद्गच्छति वर्धते जीर्यते शीर्यते परिणमतीत्युदारम् । उदारमेवौदारिकम् । नैवमन्यानि ॥ यथोद्गमं वा निरतिशयं|| ग्राह्यं छेद्यं भेद्यं दाह्यं हार्यमित्युदारणा¶दौदारिकम् । नैवमन्यानि ॥ उदारमिति च स्थूलनाम** । स्थूलमुद्गतं पुष्टं बृहन्महदित्युदारमेवौदारिकम् । नैवं शेषाणि । तेषां हि परं परं सूक्ष्ममित्युक्तम्†† ॥

वैक्रियमिति । विक्रिया विकारो विकृतिर्विकरणमित्यनर्थान्तरम् । विविधं क्रियते । एकं भूत्वानेकं भवति । अनेकं भूत्वा एकं भवति । अणु भूत्वा महद्भवति । महच्च भूत्वाणु भवति । एकाकृति भूत्वानेकाकृति भवति । अनेकाकृति भूत्वा एकाकृति भवति । दृश्यं भूत्वादृश्यं भवति । अदृश्यं भूत्वा दृश्यं भवति । भूमिचरं भूत्वा खेचरं भवति खेचरं भूत्वा भूमिचरं भवति । प्रतिघाति भूत्वाप्रतिघाति भवति । अप्रतिघाति भूत्वा प्रतिघाति भवति । युगपच्चैतान् भावाननुभवति । नैवं

* K चास्यान्यैः प्रकाशः । † S चात्मनश्च स्वरूपस्य कारणम् ।

‡ C उत्कडारम् । § A omits वा । || K adds वा ।

¶ A उद्धारणा, B K उदाहरणा, S perhaps विदारणात् ।

** C omits नाम । †† II. 38

शेषाणीति। विक्रियायां भवति* विक्रियायां जायते विक्रियायां निर्वर्त्यते विक्रियैव† वा वैक्रियम्॥

आहारकम्। आह्रियत इति आहार्यम्। आहारकमन्तर्मुहूर्तस्थिति। नैवं शेषाणि॥

तेजसो विकारस्तैजसं तेजोमयं तेजःस्वतत्त्वं शापानुग्रहप्रयोजनम्। नैवं शेषाणि॥

कर्मणो विकारः कर्मात्मकं कर्ममयमिति कार्मणम्। नैवं शेषाणि॥

एभ्य एव चार्थविशेषेभ्यः शरीराणां नानात्वं सिद्धम्‡। किं चान्यत्। कारणतो विषयतः स्वामितः प्रयोजनतः प्रमाणतः प्रदेशसङ्ख्यातो ऽवगाहनतः स्थितितो ऽल्पबहुत्वत इत्येतेभ्यश्च नवभ्यो विशेषेभ्यः शरीराणां नानात्वं सिद्धमिति[१]।

* C विक्रियायां भवं। † K विक्रयैव वा वैक्रियम्। ‡ K adds इति।

१ K and B here add a long passage explaining these indicia of distinguishing these different sorts of bodies which is copied verbatim from S.

एवमन्वर्थसंज्ञाकानि* प्रतिपाद्यौदारिकादीनि एकप्रयत्नप्रसाध्यं लक्षणभेदात् शरीरनानात्वमुपदिशति। एभ्य एव चा†र्थविशेषेभ्यः शरीराणां नानात्वं सिद्धम्। उदाराद्यर्थविशेषेभ्यो विहितलक्षणेभ्यो लिविक्तस्वरूपेभ्यः शरीराणां नानात्वं घटपटादीनामिव लक्षणभेदात्सिद्धमिति॥

* K संज्ञकानि। † B omits च।

किं चान्यदित्यादि । न केवलमन्वर्थसंज्ञाख्या*नद्वारेणैव विशेषः शरीराणामन्येभ्यो पि हेतुभ्यः सम्भवत्येव कारणादिभ्यः ॥ **तत्र कारणतस्तावत्** । स्थूलपुद्गलोपचितमूर्ति औदारिकं । न तथा वैक्रियादीनि । परं परं सूक्ष्ममिति वचनात्† ॥ **तथा विषयकृतो भेदः** । विद्याधरौदारिकशरीराणि प्रत्यानन्दीश्वरादौदारिकस्य विषयः जङ्घाचारणं प्रत्यारुचकवरपर्वतात्तिर्यक् ऊर्ध्वमापण्डकवनात्‡ । वैक्रियमसङ्ख्येयद्वीपसमुद्रविषयम् । आहारकस्य यावन्महाविदेहक्षेत्राणि । तैजसकार्मणयोरासर्वलोकात् ॥ **तथा स्वामिकृतो विशेषः** । औदारिकस्य तिर्यङ्मनुष्याः । वैक्रियस्य देवनारकाः तिर्यङ्मनुष्याश्च केचित् । आहारकस्य चतुर्दशपूर्वधरमनुष्यसंयताः । तैजसकार्मणयोः सर्वसंसारिणः ॥ **तथा§ प्रयोजनकृतो भेदः** । औदारिकस्य धर्माधर्मसुखदुःखकेवलज्ञानावाप्त्यादि प्रयोजनम् । वैक्रियस्य स्थूलसूक्ष्मैकत्वव्योमचरक्षितिगतिविषयाद्यनेकलक्षणा|| विभूतिः । आहारकस्य सूक्ष्मव्यवहितदूरवगाहार्थव्यवच्छित्तिः । तैजसस्याहारपाकः शापानुग्रहप्रदानसामर्थ्यं च । कार्मणस्य भवान्तरगतिपरिणामः ॥ **तथा प्रमाणकृतो भेदः** । सातिरेकं योजनसहस्रमौदारिकम् । योजनलक्षप्रमाणं वैक्रियम् । रत्निप्रमाणमाहारकम् । लोकायामप्रमाणे तैजसकार्मणे ॥ **प्रदेशसङ्ख्यातो भेदः** । प्रदेशतोऽसङ्ख्येयगुणं प्राक्तैजसात् अनन्तगुणे

* B संज्ञासद्वा० । † II 38 ।

‡ K आपाण्डक० । § K तेषां for तथा । || B लक्षणविभूति ।

परे इत्युक्तः* प्रदेशभेदः प्राक् ॥ **तथावगाहनाकृतो विशेषः ।** सातिरेकयोजनसहस्रामौदारिकमसङ्ख्येयप्रदेशेषु यावत्स्ववगाढं भवति । तेभ्यो बहुतरकासङ्ख्येयप्रदेशावगाढं योजनलक्षप्रमाणं वैक्रियं भवति । आहारकमाभ्यामल्पतरप्रदेशावगाढं भवति । हस्तमात्रत्वात् । तैजसकार्मणे लोकान्तायताकाशश्रेण्यवगाढे भवतः ॥ **तथा स्थितिकृतो भेदः ।** औदारिकं जघन्येनान्तर्मुहूर्तस्थिति उत्कर्षेण त्रिपल्योपमस्थिति । वैक्रियं जघन्येनान्तर्मुहूर्तस्थिति उत्कर्षेण त्रयस्त्रिंशत्सागरोपमस्थिति । आहारकमन्तर्मुहूर्तस्थित्येव । तैजसकार्मणयोः सन्तानानुरोधादनादित्वसपर्यवसानता चाभव्यसम्बन्धितया अनादित्वं सपर्यवसानता च भव्यसम्बन्धित्वेनेति । **तथाल्पबहुत्वकृतो विशेषः ।** सर्वस्तोकमाहारकं यदि संभवति कदाचिन्न संभवत्यपि । किं कारणम् । येन तस्यान्तरमुक्तं जघन्येनैकः समय उत्कृष्टेन षण्मासाः तद्यदि भवति ततो जघन्यैकमादिं कृत्वा यावदुत्कर्षेण नवसहस्राणि युगपद्भवन्त्याहारकशरीराणाम् । आहारकाद्वैक्रियशरीराण्यसङ्ख्येयगुणानि नारकदेवानामसङ्ख्येयत्वात् असङ्ख्येयोत्सर्पिणीसमयराशिसमसङ्ख्यानि भवन्ति । वैक्रियशरीरेभ्य औदारिकशरीराण्यसङ्ख्येयगुणानि तिर्यक्शरीरमनुष्याणामसङ्ख्येयत्वात् असङ्ख्येयोत्सर्पिण्यवसर्पिणीसमयराशिसमसङ्ख्यानि । ननु च तिर्यञ्चोऽनन्ताः तत्कथमानन्त्ये सत्यसङ्ख्येयानि शरीराणि स्युः

* II 39 II 40 ।

† K °सहस्रप्रमाणमौदा° ।

अत्राह । आसु चतसृषु संसारगतिषु को लिङ्गनियम इति । अत्रोच्यते । जीवस्यौदयिकेषु भावेषु* व्याख्यायमानेषूक्तम् । त्रिविधमेव लिङ्गं स्त्रीलिङ्गं पुंलिङ्गं नपुंसकलिङ्गमिति† ॥ तथा चारित्रमोहे नोकषायवेदनीये त्रिविध एव वेदो वक्ष्यते‡ । स्त्रीवेदः पुंवेदो नपुंसकवेद इति ॥ तस्मात्त्रिविधमेव लिङ्गमिति ॥ तत्र

**नारकसंमूर्छिनो नपुंसकानि§ ॥ ५० ॥**

नारकाश्च सर्वे|| संमूर्छिनश्च नपुंसकान्येव भवन्ति । न स्त्रियो न पुमांसः¶ । तेषां हि** चारित्रमोहनीयनोकषायवेदनीयाश्रयेषु त्रिषु वेदेषु नपुंसकवेदनीयमेवैकमशुभगतिनामापेक्षं पूर्वबद्धनिकाचितमुदयप्राप्तं भवति नेतरे इति ॥

---

* K जीवस्यौदयिकभावेषु ।  † II. 6.
‡ VIII. 10.  § Var S नपुंसकाः ।
|| C सर्वे twice ।  ¶ C पृ० 500 ।  ** K omits हि ।

---

उच्यते । प्रत्येकशरीराणामसङ्ख्येयानि साधारणास्त्वनन्ताः तेषामनन्तानामेकं शरीरं भवतीत्यतोऽसङ्ख्येयानि न पुनरनन्तानामपि प्रत्येकं शरीरमस्ति तस्मात्सुष्ठूक्तमसङ्ख्येयानीति ॥ औदारिकशरीरेभ्यः तैजसकार्मणान्यनन्तगुणानि । तानि हि प्रत्येकं सर्वजीवानां संसारिणां भवन्त्यतोऽनन्तानि न पुनरेकं तैजसं कार्मणं वा बहूनामिति ॥ एवमेतेभ्यः कारणादिभ्यः नवभ्यो विशेषेभ्यः शरीराणां नानात्वं* प्रतिष्ठितमवगन्तव्यमिति ॥

---

* B adds सिद्धं ।

## न देवाः ॥ ५१ ॥

देवाश्चतुर्निकाया अपि नपुंसकानि न भवन्ति। स्त्रियः पुमांसश्च भवन्ति। तेषां हि शुभगतिनामापेक्षे स्त्रीपुंवेदनीये पूर्वबद्धनिकाचिते उदयप्राप्ते द्वे एव भवतो नेतरत्। पारिशेष्या*च्च गम्यते जराय्वण्डपोतजास्त्रिविधा भवन्ति स्त्रियः पुमांसो नपुंसकानीति ॥

अत्राह। चतुर्गतावपि संसारे किं व्यवस्थिता स्थितिरायुष उताकालमृत्युरप्यस्तीति। अत्रोच्यते। †द्विविधान्यायूंषि। अपवर्तनीयानि अनपवर्तनीयानि च। अनपवर्तनीयानि पुनर्द्विविधानि। सोपक्रमाणि निरुपक्रमाणि च। अपवर्तनीयानि तु‡ नियतं सोपक्रमाणीति ॥ तत्र

## औपपातिकचरमदेहोत्तमपुरुषासङ्ख्येयवर्षायुषोऽनपवर्त्यायुषः[1] ॥ ५२ ॥

---

* S perhaps परिशेषाच्च। † B त्रि०। ‡ K omits तु।

---

[1] Var S omits उत्तमपुरुष। After discussing this point very elaborately S sums up by saying he is very doubtful as to the true reading. A portion of it is as follows :—

उत्तमपुरुषास्तीर्थकरचक्रवर्तिबलदेववासुदेवादयः केचिदभिदधते नास्ति सूत्रकारस्योत्तमपुरुषग्रहणमिति तत्कथं तीर्थकरादिसंग्रहमिति चेदेवं मन्यन्ते चरमदेहग्रहणाद्ग्रहीष्यन्ते कथं ये किल चरमदेहास्ते नियमत एवोत्तमा भवन्ति उत्तमास्तु चरमदेहत्वेन भाज्या वासुदेवादय इति तस्मादनार्षमुत्तमपुरुषग्रहण-

औपपातिकाश्चरमदेहा उत्तमपुरुषा असङ्ख्येयवर्षायुष इत्येते ऽनपवर्त्यायुषो भवन्ति। तत्रौपपातिका नारकदेवाश्चेत्युक्तम्*। चरमदेहा मनुष्या एव भवन्ति नान्ये। चरमदेहा अन्त्यदेहा इत्यर्थः†। ये तेनैव शरीरेण सिध्यन्ति। उत्तमपुरुषास्तीर्थकरचक्रवर्त्यर्धचक्रवर्तिनः। असङ्ख्येयवर्षायुषो मनुष्याः तिर्यग्योनिजाश्च भवन्ति। सदेवकुरूत्तरकुरुषु सान्तरद्वीपकास्वकर्मभूमिषु कर्मभूमिषु च सुषमसुषमायां सुषमायां सुषमदुःषमायामित्यसङ्ख्येयवर्षायुषो मनुष्या भवन्ति। अत्रैव‡ बाह्येषु द्वीपेषु समुद्रेषु तिर्यग्योनिजा असङ्ख्येयवर्षायुषो भवन्ति। औपपातिकाश्चासङ्ख्येयवर्षायुषश्च निरुपक्रमाः। चरमदेहाः सोपक्रमा निरुपक्रमाश्चेति। एभ्य औपपातिकचरमदेहा§ऽसङ्ख्येयवर्षायुर्भ्यः शेषा मनुष्यास्तिर्यग्योनिजाः सोपक्रमा निरुपक्रमाश्चापवर्त्यायुषो ऽनपवर्त्यायुषश्च भवन्ति। तत्र ये ऽपवर्त्यायुषस्तेषां विषशस्त्रकण्टकाग्न्युदकाह्यशि||ताजीर्णाशनिप्रपातोद्बमिति। उभयथा च भाष्यमुपलभ्यते अविगानात् आदावुत्तमपुरुषास्तीर्थकरादय इति विवृतमुत्तरकालं पुनर्नोपात्तमुत्तमपुरुषग्रहणं निरुपक्रमसोपक्रमनिरूपणायामतो भाष्यादेव संदेहः किमस्ति नास्तीति संशयात्तमेवेदमस्माकम्॥ In श्रावकप्रज्ञप्ति by the same author in verse 74, उत्तमपुरुष in this context is adopted.

* II. 35. † B नान्ये चरमदेहा इत्यदेहा इत्यर्थः। ‡ C adds च।

§ C adds उत्तमपुरुष but S distinctly says the word is not in his text.

|| B उदकानिवानिता, K उदकानितामिता। A उदकाहितामिता०।

ग्न्यनश्वापदवज्रनि*र्घातादिभिः क्षुत्पिपासाशीतोष्णादिभिश्च द्वन्द्वोपक्रमैरायुरपवर्त्यते† । अपवर्तनं शीघ्रमन्तर्मुहूर्तात्कर्मफलोपभोगः । उपक्रमो ऽपवर्तननिमित्तम् ॥

अत्राह । यद्यपवर्तते‡ कर्म तस्मात्कृतनाशः प्रसज्यते यस्मान्न वेद्यते । अथास्त्यायुष्कं कर्म म्रियते च तस्मादकृताभ्यागमः प्रसज्यते । येन सत्यायुष्के म्रियते ततश्चायुष्कस्य कर्मण आफल्यं प्रसज्यते§ । अनिष्टं चैतत् । एकभवस्थिति चायुष्कं कर्म न जात्यन्तरानुबन्धि तस्मान्नापवर्तनमायुषो ऽस्तीति ॥ अत्रोच्यते । कृतनाशाकृताभ्यागमा||फल्यानि कर्मणो न विद्यन्ते । नाप्यायुष्कस्य जात्यन्तरानुबन्धः । किं तु यथोक्तैरुपक्रमैरभिहतस्य सर्वसंदोहेनोदयप्राप्तमायुष्कं कर्म शीघ्रं पच्यते तदपवर्तनमित्युच्यते । संहतशुष्कतृण¶राशिदहनवत् । यथा हि संहतस्य शुष्कस्यापि तृणराशेरवयवशः क्रमेण दह्यमानस्य चिरेण दाहो भवति तस्यैव शिथिल**प्रकीर्णोपचितस्य सर्वतो†† युगपदादीपितस्य पवनोपक्रमाभिहतस्याशु दाहो भवति‡‡ तद्वत् । यथा वा सङ्ख्यानाचार्यः करणलाघवार्थं गुणकारभागहाराभ्यां राशिं§§च्छेदादेवापवर्तयति न च सङ्ख्येयस्यार्थस्याभावो भवति तद्वदुपक्रमाभिहतो मरणसमुद्घातदुःखार्त्तः कर्म-

* B वज्राद्विघाता॰, K वज्रादिघाता॰ । A वज्रोपघातादिभिः ।

† A अपवर्तते । ‡ K यद्यपवर्त्यते ।

§ K प्रसज्यात् । || K B ॰मासाफल्यानि ।

¶ K संहतलक्षणराशिशुष्कदहन॰ । ** C adds त्व ।

†† सर्वशो । ‡‡ B K add चार्थस्य । §§ K B राशिं॰

प्रत्ययमनाभोगयोगपूर्वकं करणविशेषमुत्पाद्य फलोपभोगलाघवार्थं कर्मापवर्तयति न चास्य फलाभाव इति ॥ किं चान्यत् । यथा वा धौतपटो जलार्द्र एव संहतश्चिरेण शोषमुपयाति स एव च वितानितः सूर्यरश्मिवाय्वभिहतः* क्षिप्रं शोषमुपयाति न च संहते तस्मिन्प्रभूतस्नेहागमो† नापि वितानिते‡ ऽकृत्स्नशोषः तद्वद्यथोक्तनिमित्तापवर्तनैः कर्मणः क्षिप्रं फलोपभोगो भवति । न च कृतप्रणाशाकृताभ्यागमाफल्यानि ॥

इति तत्त्वार्थाधिगमे ऽर्हत्प्रवचनसंग्रहे§

द्वितीयो ऽध्यायः समाप्तः ॥

* K तिग्मरश्मिवाय्वभिहतः ।

† K तस्मिन्प्रभूतस्नेहागमो ।

‡ A adds सति ।

§ C adds भाष्यत ।

# अथ तृतीयो ऽध्यायः ॥



अत्राह । उक्तं भवता । नारका इति गतिं प्रतीत्य जीवस्यौदयिको भावः[*] । तथा जन्मसु नारकदेवानामुपपातः[†] । वक्ष्यति च । स्थितौ नारकाणां च द्वितीयादिषु[‡] । आस्रवेषु बह्वारम्भपरिग्रहत्वं च नारकस्यायुषः[§] इति ॥ तत्र के नारका नाम क्व चेति[‖] । अत्रोच्यते । नरकेषु भवा नारकाः । तत्र नरकप्रसिद्ध्यर्थमिदमुच्यते

**रत्न-शर्करा-वालुका-पङ्क-धूम-तमो-महातमःप्रभा-भूमयो घनाम्बुवाताकाशप्रतिष्ठाः सप्ताधो ऽधः पृथुतराः ॥ १ ॥**

रत्नप्रभा शर्कराप्रभा वालुकाप्रभा पङ्कप्रभा धूमप्रभा तमःप्रभा महातमःप्रभा इत्येता[¶] भूमयो घनाम्बुवाताकाशप्रतिष्ठा भवन्त्येकैकशः[**] सप्त अधो ऽधः । रत्नप्रभाया अधः शर्कराप्रभा । शर्कराप्रभाया अधो वालुकाप्रभा । इत्येवं शेषाः । अम्बुवाताकाशप्रतिष्ठा[††] इति सिद्धे घनग्रहणं क्रियते यथा प्रतीयते घनमेवाम्बु अधः पृथिव्याः[‡‡] । वातास्तु घनास्तनवश्चेति । तदेवं

---

* II. 6. † II. 35. ‡ IV. 34. § VI. 16. ‖ K वेति ।

¶ C omits इत्येता । ** S एकशः ।

†† K प्रतिष्ठा here and elsewhere. ‡‡ C पृथिव्यां ।

खरपृथिवी पङ्कप्रतिष्ठा पङ्को घनोदधिवलयप्रतिष्ठो* घनोदधिवलयं घनवातवलयप्रतिष्ठं घनवातवलयं तनुवातवलयप्रतिष्ठं ततो महातमोभूतमाकाशम्। सर्वं चैतत्पृथिव्यादि तनुवातवलयान्तमाकाशप्रतिष्ठम्। आकाशं त्वात्मप्रतिष्ठम्। उक्तमवगाहनमाकाशस्येति†। तदनेन क्रमेण लोकानुभावसंनिविष्टा‡[१] असङ्ख्येययोजनकोटीकोट्यो विस्तृताः सप्त भूमयो रत्नप्रभाद्याः॥

सप्तग्रहणं नियमार्थं रत्नप्रभाद्या§ माभूवन्नेकशो ह्य॥नियतसङ्ख्या इति। किं चान्यत्। अधः सप्तैवेत्यवधार्यते। ऊर्ध्वं त्वेकैवेति वक्ष्यते। अपि च तन्त्रान्तरीया[२] असङ्ख्येयेषु लोकधातुष्वसङ्ख्येयाः पृथिवीप्रस्तारा इत्यध्यवसिताः। तत्प्रतिषेधार्थं च सप्तग्रहणमिति॥

सर्वास्चैता अधोऽधः पृथुतराः छत्रातिच्छत्रसंस्थिताः। धर्मा वंशा शैलाञ्जनारिष्टा माधव्या माधवीति¶ चासां नामधेयानि यथासङ्ख्यमेव** भवन्ति। रत्नप्रभा घनभावेनाशीतं योजनशतसहस्रं शेषा द्वात्रिंशदष्टाविंशतिविंशत्यष्टादशषोडशाष्टाधिकमिति††।

* K colophon घनशब्दलोपः। † V. 18. ‡ H B omit सं।
§ B omits. || C omits हि।
¶ B मघा माघवतीति। ** K यथासङ्ख्यमेव।
†† K द्वात्रिंशदष्टाविंशतिः विंशतिः अष्टादश षोडशाष्टाधिकमिति।

[१] S लोकस्थितिरनाद्या न केनचिदीश्वरादिना कृता व्योमवदकृत्रिमा
[२] S प्रायो मायासूनवीयाः।

सर्वे घनोदधयो विंशतियोजनसहस्राणि*। घनवाततनुवातास्त्वसङ्ख्येयानि अधो ऽधस्तु घनतरा विशेषेणेति॥

## तासु नरकाः॥ २॥

तासु रत्नप्रभाद्यासु भूमिषूर्ध्वमधश्चैकशो योजनसहस्रमेकैकं वर्जयित्वा मध्ये नरका भवन्ति। तद्यथा। उष्ट्रिकापिष्टपचनीलोहीकर†केन्द्रजानुकाजन्तो‡कायस्कुम्भा§यःकोष्ठादि||संस्थाना वज्रतलाः सीमन्तकोपक्रान्ता¶ रौरवोऽच्युतो रौद्रो हाहारवो** घातनः शोचनस्तापनः†† क्रन्दनो विलपन‡‡श्छेदनो भेदनः खटाखटः§§ कालपिञ्जर|||| इत्येवमाद्या अशुभनामानः कालमहाकालरौरवमहारौरवाप्रतिष्ठानपर्यन्ताः॥ रत्नप्रभायां नरकाणां प्रस्तारा¶¶स्त्रयोदश। द्विद्व्यूनाः शेषासु॥ रत्नप्रभायां नरकवासानां*** त्रिंशच्छतसहस्राणि। शेषासु पञ्चविंशतिः पञ्चदश दश त्रीण्येकं पञ्चोनं नरक†††शतसहस्रमित्याषष्ठ्याः। सप्तम्यां तु पञ्चैव महानरका‡‡‡ इति॥

## नित्याशुभतरलेश्यापरिणामदेहवेदनाविक्रियाः॥ ३॥

ते नरका भूमिक्रमेणाधो ऽधो निर्माणतो ऽशुभतराः।

---

* K adds घनाः। † B लौहीकर। ‡ B जानकजचा K जन्ता। § K कायास्कुम्भ। || K कोष्टकादि। ¶ K सीमन्तकोपक्राक्रान्ताः B सीमन्तकोपकाक्रान्तो। ** C हारवो। †† K शोधनः पाचनः। ‡‡ B विलेपन। §§ K खाटाखटः। |||| A कलपिञ्जरः K. कालपञ्जरः। ¶¶ प्रस्तराः *** K नरकावासानां। ††† K नरकावास०। ‡‡‡ K omits महा।

अशुभा रत्नप्रभायां ततो ऽशुभतराः शर्कराप्रभायां ततो ऽप्यशुभतरा वालुकाप्रभायाम्। इत्येवमासप्तम्याः॥

नित्यग्रहणं गतिजातिशरीराङ्गोपाङ्गकर्मनियमादेते लेश्यादयो भावा नरकगतौ नरकपञ्चेन्द्रियजातौ* च नैरन्तर्येणाभवक्षयोद्वर्तनाद्भवन्ति न कदाचिदक्षिनिमेषमात्रमपि न भवन्ति शुभा वा भवन्त्यतो† नित्या इत्युच्यन्ते‡॥

अशुभतरलेश्याः। कापोतलेश्या रत्नप्रभायाम्। ततस्तीव्रतरसंक्लेशाध्यवसाना कापोता शर्कराप्रभायाम्। ततस्तीव्रतरसंक्लेशाध्यवसाना कापोतनीला वालुकाप्रभायाम्। ततस्तीव्रतरसंक्लेशाध्यवसाना नीला पङ्कप्रभायाम्। ततस्तीव्रतरसंक्लेशाध्यवसाना नीलकृष्णा धूमप्रभायाम्। ततस्तीव्रतरसंक्लेशाध्यवसाना कृष्णा तमःप्रभायाम्। ततस्तीव्रतरसंक्लेशाध्यवसाना कृष्णैव महातमःप्रभायामिति॥

अशुभतरपरिणामः§। बन्धनगतिसंस्थानभेदवर्णगन्धरसस्पर्शागुरुलघुशब्दाख्यो दशविधो|| ऽशुभः पुद्गलपरिणामो¶ नरकेषु। अशुभतरश्चाधो ऽधः। तिर्यगूर्ध्वमधश्च सर्वतो ऽनन्तेन भयानकेन नित्योत्तमकेन** तमसा नित्यान्धकाराः श्लेष्ममूत्रपुरीषस्रोतो††मलरुधिरवसामेदपूयानुलेपनतलाः श्मशानमिव पूतिमांसकेशास्थिचर्मदन्तनखास्तीर्णभूमयः। श्वशृगालमार्जारनकुलसर्पमूषक‡‡-

* B omits, A C नरकजातौ। † C omits शुभा वा भवन्ति। ‡ A and C omit. § K परिणामाः। || K adds अपि। ¶ C omits पुद्गल। ** K नित्यमोत्तमकेन। †† K श्रोतो०। ‡‡ K. A. C मूषिक।

हस्त्यश्वगोमानुषशवकोष्ठा*शुभतरगन्धाः । हा मातर्धिगहो† कष्टं बत मुञ्च तावद्धावत‡ प्रसीद§ भर्तर्मा वधीः कृपणकमित्यनुबद्धरुदितैस्तीव्रकरुणैर्दीनविक्लवैर्विलापैरार्त्तस्वनैर्निनादैर्दीनकृपणकरुणैर्याचितैर्बाष्पसंनिरुद्धैर्निस्तनितैर्गाढवेदनैः कूजितैः‖ सन्तापोष्णैश्च निश्वासैरनुपरतभय¶स्वनाः** ॥

अशुभतरदेहाः । देहाः शरीराणि । अशुभनामप्रत्ययादशुभान्यङ्गोपाङ्गनिर्माणसंस्थानस्पर्शरसगन्धवर्णस्वराणि । हुण्डानि†† निर्लूनाण्डजशरीराकृतीनि क्रूरकरुणबीभत्सप्रतिभयदर्शनानि दुःखभाञ्ज्यशुचीनि च तेषु शरीराणि भवन्ति । अतो ऽशुभतराणि चाधो ऽधः । सप्त धनूंषि त्रयो हस्ताः षडङ्गुलमिति शरीरोच्छ्रायो नारकाणां रत्नप्रभायाम् । द्विर्द्विः शेषासु । स्थितिवच्चोत्कृष्टजघन्यता‡‡ वेदितव्या ॥

अशुभतरवेदनाः । अशुभतराश्च वेदना भवन्ति नरकेष्वधो ऽधः । तद्यथा । उष्णवेदनास्तीव्रास्तीव्रतरास्तीव्रतमाश्च आ तृतीयायाः । उष्णशीते चतुर्थ्याम् । शीतोष्णे पञ्चम्याम् । परयोः शीताः शीततराश्चेति । तद्यथा । प्रथमशरत्काले चरमनिदाघे वा पित्तव्याधि§§प्रकोपाभिभूतशरीरस्य सर्वतो दीप्ताग्निराशि-

---

* K कोष्ठ, B कोथ ।  † K मातर्द्विधा ऽहो ।  ‡ A. C यावत ।

§ K प्रसीदत भ्रातर्मा ।  ‖ C कूर्जितैः ।  ¶ K प्रतिभय for भय ।

** Out of these ten kinds of परिणाम only वर्ण-गन्ध and शब्दपरिणाम are described; the rest are only mentioned.

†† K. B तुण्डानि ।  ‡‡ C ०जघन्यतो ।  §§ C omits व्याधि ।

परिवृतस्य व्यभ्रे नभसि मध्याह्ने निवाते ऽतिरस्कृतातपस्य यादृगुष्णजं दुःखं भवति ततो ऽनन्तगुणं प्रकृष्टं* कष्टमुष्णवेदनेषु नरकेषु भवति। पौषमाघयोश्च मासयोस्तुषारलिप्त†गात्रस्य‡ रात्रौ हृदयकरचरणाधरौष्ठदशनायासिनि प्रतिसमयप्रवृद्धे शीतमारुते निरग्न्याश्रयप्रावरणस्य यादृक्§शीतसमुद्भवं दुःखमशुभं भवति ततो ऽनन्तगुणं प्रकृष्टं कष्टं ||शीतवेदनेषु नरकेषु भवति। यदि किलोष्णवेदनान्नरकादुत्क्षिप्य नारकः सुमहत्यङ्गारराशावुद्दीप्ते प्रक्षिप्येत स किल¶ सुशीतां मृदुमारुतं** शीतलां छायामिव प्राप्तः सुखमनुपमं विन्द्यान्निद्रां चोपलभेत†† एवं कष्टतरं नारकमुष्ण‡‡माचक्षते। तथा किल यदि§§ शीतवेदनान्नरकादुत्क्षिप्य नारकः कश्चिदाकाशे माघमासे निशि प्रवाते महति तुषारराशौ प्रक्षिप्येत सदन्तशब्दोत्तमकर|||| प्रकम्पायामकरे ऽपि तत्र सुखं¶¶ विन्द्यादनुपमां निद्रां चोपलभेत एवं कष्टतरं नारकं शीतदुःखमाचक्षत इति ॥

अशुभतरविक्रियाः। अशुभतराश्च विक्रिया नरकेषु नारकाणां भवन्ति। शुभं करिष्याम इत्यशुभतरमेव विकुर्वते। दुःखाभिभूतमनसश्च*** दुःखप्रतीकारं चिकीर्षवो गरीयस एव ते दुःखहेतून्विकुर्वत इति ॥

---

* K अनन्तगुणप्रकृष्टं।　† K अवलिप्त for लिप्त।　‡ B सत्त्वस्य।
§ B यावत्शीतं।　|| K adds शीतं।　¶ B omits स किल।
** B मारुता K सुशीतमृदुमारुतां।　†† K ०लभते B ०लभ्यते।
‡‡ K उष्णदुःखं।　§§ K places यदि before किल।
|||| K. B omit कर।　¶¶ K सुखमनुपमं विद्यान्निद्रां चोपलभेत।
*** A अभिहत for अभिभूत C दुर्नीतस्य for दुःख।

## परस्परोदीरितदुःखाः[*] ॥ ४ ॥

परस्परोदीरितानि[†] दुःखानि नरकेषु नारकाणां भवन्ति। क्षेत्रस्वभावजनिताच्चाशुभात्पुद्गलपरिणामादित्यर्थः ॥

तत्र क्षेत्रस्वभावजनितपुद्गलपरिणामः[‡] शीतोष्णक्षुत्पिपासादिः। शीतोष्णे व्याख्याते[§] क्षुत्पिपासे वक्ष्यामः[‖]। अनुपरतशुष्केन्धनोपादानेनेव[¶]वाग्निना तीक्ष्णेन प्रततेन क्षुदग्निना दन्दह्यमानशरीरा अनुसमयमाहरयन्ति ते सर्वे पुद्गलानप्यसु[**]स्तीव्रया च नित्यानुषक्तया पिपासया शुष्ककण्ठोष्ठतालुजिह्वाः सर्वोदधीनपि पिबेयुर्न च तृप्तिं समाप्नुयुर्वर्धेयातामेव चैषां क्षुत्तृष्णे इत्येवमादीनि क्षेत्रप्रत्ययानि ॥

परस्परोदीरितानि च। अपि चोक्तम्। भवप्रत्ययोऽवधिर्नारकदेवानामिति[††]। तन्नारकेष्ववधिज्ञानमशुभभवहेतुकं मिथ्यादर्शनयोगाच्च[‡‡] विभङ्गज्ञानं भवति। भावदोषोपघातात्तु तेषां दुःखकारणमेव भवति। तेन हि ते सर्वतः तिर्यगूर्ध्वमधश्च दूरत एवाजस्रं दुःखहेतून्पश्यन्ति। यथा च काकोलूकमहिनकुलं चोत्पत्त्यैव बद्धवैरं तथा परस्परं प्रति नारकाः। यथा वापूर्वान्[§§] शुनो दृष्ट्वा श्वानो निर्दयं क्रुध्यन्त्यन्योन्यं प्रहरन्ति च तथा तेषां नारकाणामवधिविषयेण दूरत एवान्योन्यमालोक्य क्रोधस्तीव्रानुशयो जायते दुरन्तो भवहेतुकः। ततः प्रागेव दुःखसमुद्घातार्त्ताः क्रोधाग्न्यादीपितमनसोऽतर्किता इव श्वानः

---

* H K दु.खाश्च। † K adds च here. ‡ K जनितः पुद्गल०।
§ II 3. ‖ cf IX 9. ¶ A ०नेवा०। ** K न च तृप्तिमाप्नुयुः।
†† I. 22. ‡‡ K मिथ्यादर्शनोपयोगाच्च। §§ K स्वन्याम for अपूर्वान।

समुद्धता वैक्रियं भयानकं रूपमास्थाय तत्रैव पृथिवीपरिणामजानि चेत्रानुभावजनितानि चायःशूलशिलामुसलमुद्गरकुन्ततोमरासिपट्टिश*शक्त्ययोघनखड्गयष्टिपरशुभिण्डिमाला†दीन्यायुधान्यादाय करचरणदशनैश्चान्योन्यमभिघ्नन्ति । ततः परस्पराभिहता विकृताङ्गा निस्तनन्तो गाढवेदनाः शूनाघातनप्रविष्टा इव महिषसूकरोरभ्राः स्फुरन्तो रुधिरकर्दमे चेष्टन्ते‡ । इत्येवमादीनि परस्परोदीरितानि नरकेषु नारकाणां दुःखानि भवन्तीति ॥

## संक्लिष्टासुरोदीरितदुःखाश्च प्राक् चतुर्थ्याः ॥ ५ ॥

संक्लिष्टासुरोदीरितदुःखाश्च नारका भवन्ति । तिसृषु भूमिषु प्राक् चतुर्थ्याः । तद्यथा । अम्बा§म्बरीषश्यामशबलरुद्रोपरुद्रकालमहाकालास्यसिपत्रवन||कुम्भीवालुकावैतरणीखरस्वर¶महाघोषाः पञ्चदश परमाधार्मिका मिथ्यादृष्टयः पूर्वजन्मसु संक्लिष्टकर्माणः पापाभिरतय आसुरीं गतिमनुप्राप्ताः कर्मक्लेशजा एते तास्तीव्रान्नारकाणां वेदनाः समुदीरयन्ति चित्राभिरुपपत्तिभिः । तद्यथा । तप्तायोरसपायननिष्टप्ता**यःस्तम्भालिङ्गनकूटशाल्मल्यग्रारोपणावतारणायोघनाभिघातवासी††क्षुरतक्षणक्षारतप्ततैलाभिषे-

---

* K असिपट्टिस ।  † K भिंडिपाता० ।

‡ A ०पि वेष्टन्ते । K वि चेष्टन्त ।  § B अम्बर ।  || K घन for वन ।

¶ B खरस्वर ।  ** A पायिनो निष्टतप्त०° ।  †† C वासा ।

चना*यःकुम्भपाकाम्बरीषतर्जनयन्त्रपीडनायःशूलशलाकाभेदनक्रकचपाटनाङ्गारदहनवाहनासूची†शाद्वाला‡पकर्षणैः तथा सिंहव्याघ्र§द्वीपिश्वशृगालवृककोकमार्जारनकुल||सर्पवायसगृध्रकाको¶लूकश्येनादिखादनैः तथा तप्तवालुकावतरणासिपत्त्रवनप्रवेशनवैतरण्यवतारणपरस्परयोधनादिभिरिति ॥

स्यादेतत्किमर्थं त एवं कुर्वन्तीति। अत्रोच्यते। पापकर्माभिरतय इत्युक्तम्। तद्यथा गोवृषभमहिषवराह**मेषकुक्कुटवार्तका††लावकान्मुष्टिमल्लांश्च युध्यमानान् परस्परं चाभिघ्नतः पश्यतां रागद्वेषाभिभूतानामकुशलानुबन्धिपुण्यानां नराणां परा प्रीतिरुत्पद्यते तथा तेषामसुराणां नारकांस्तथा तानि कारयतामन्योन्यं घ्नतश्च पश्यतां परा प्रीतिरुत्पद्यते। ते हि दुष्टकन्दर्पास्तथाभूतान् दृष्ट्वाट्टहासं मुञ्चन्ति‡‡ चेलोत्क्षेपाक्ष्वेडिता§§स्फोटितावल्गित||||तलताल निपातनांश्च¶¶ कुर्वन्ति महतश्च सिंहनादान्नदन्ति। तच्च तेषां सत्यपि देवत्वे सत्सु च कामिकेष्वन्येषु प्रीतिकारणेषु मायानिदानमिथ्यादर्शनशल्यतीव्रकषायोपहतस्यानालोचित***भावदोषस्याप्रत्यवम†††र्षस्याकुशलानुब-

---

* C ०षषन। † A प्रूची। B वाहनासूचि।

‡ A शाद्वल K सादाल। B शाड्वाल।

§ K adds च्छ। || K adds आखु। ¶ K कंक for काक।

** K adds वृषत before मेष and has कुकुट for कुक्कुट।

†† A वार्तक। ‡‡ C मुदन्ति। K अट्टहासान्।

§§ K क्ष्वेलित। D चेलोत्क्षेपात्क्ष्वेडित। |||| K वल्गित। D वल्गिते।

¶¶ A निपातांश्च K नियतानांश्च। *** B ०विभाव।

††† K B प्रत्यवकर्षस्य। D प्रत्यवमर्शस्य।

न्धिपुण्य*कर्मणो बालतपमश्च भावदोषानुकर्षिणः फलं य†त्तत्स्व-प्यन्येषु प्रीतिहेतुष्वशुभा‡ एव प्रीतिहेतवः समुत्पद्यन्ते ॥

इत्येवमप्रीतिकरं§ निरन्तरं सुतीव्रं दुःखमनुभवतां मरणमेव|| काङ्क्षतां तेषां न विपत्तिरकाले विद्यते कर्मभिर्धारितायुषाम्। उक्तं हि। औपपातिकचरमदेहोत्तमपुरुषासङ्ख्येयवर्षायुषो ऽन-पवर्त्यायुष¶ इति। नैव तत्र शरणं विद्यते नाप्यपक्रमणम्। ततः कर्मवशादेव दग्धपाटितभिन्न**च्छिन्नक्षतानि च तेषां सद्य एव संरोहन्ति शरीराणि†† दण्डराजिरिवाम्भसीति ॥

एवमेतानि त्रिविधानि‡‡ दुःखानि नरकेषु नारकाणां भवन्तीति ॥

## तेष्वेकत्रिसप्तदशसप्तदशद्वाविंशतित्रयस्त्रिंशत्सागरो-पमा§§ सत्त्वानां परा स्थितिः ॥ ६ ॥

तेषु नरकेषु नारकाणां पराः स्थितयो भवन्ति। तद्यथा। रत्नप्रभायामेकं सागरोपमम्। एवं त्रिसागरोपमा सप्तसागरो-पमा दशसागरोपमा सप्तदशसागरोपमा द्वाविंशतिसागरोपमा

* B पुण्यस्य।

† K omits यत्।

‡ C स्वशुभभावा एव। K प्रीतिमद्धेतुष्वशुभा।

§ B स्वप्रतीकारं।

|| K सुतिव्रतरदुःखमनुभवतां मरणपि।

¶ II. 53.

** K भग्न for भिन्न।

†† C omits.

‡‡ C विविधानि।

§§ K सागरोपमाः।

त्रयस्त्रिंशत्सागरोपमा*। जघन्या तु पुरस्ताद्वक्ष्यते। नारकाणां च द्वितीयादिषु। दशवर्षसहस्राणि प्रथमायामिति[१]॥ [IV.43.44]

तत्रास्रवै†र्यथोक्तैर्नारकसंवर्तनीयैः कर्मभिरसंज्ञिनः प्रथमायामुत्पद्यन्ते। सरीसृपा द्वयोरादितः प्रथमद्वितीययोः। एवं पक्षिणस्तिसृषु। सिंहाश्चतसृषु। उरगाः पञ्चसु। स्त्रियः षट्सु। मत्स्यमनुष्याः सप्तस्विति। न तु देवा नारका वा नरकेषूपपत्तिं प्राप्नुवन्ति। न हि तेषां बह्वारम्भपरिग्रहादयो‡ नरकगतिनिर्वर्तका हेतवः सन्ति। नाप्युद्वर्त्य नारका देवेषूत्पद्यन्ते§। न ह्येषां सरागसंयमादयो|| देवगतिनिर्वर्तका हेतवः सन्ति। उद्वर्तितास्तु तिर्यग्योनौ मनुष्येषु¶ वोत्पद्यन्ते। मानुषत्वं** प्राप्य केचित्तीर्थकरत्वमपि प्राप्नुयुरादितस्तिसृभ्यः निर्वाणं चतसृभ्यः संयमं पञ्चभ्यः संयमासंयमं षड्भ्यः सम्यग्दर्शनं सप्तभ्यो ऽपीति॥

द्वीपसमुद्रपर्वत††ह्रदतडाग‡‡सरांसि[२] ग्रामनगरपत्तनादयो विनिवेशा बादरो वनस्पतिकायो§§ वृक्षतृणगुल्मादिः द्वीन्द्रिया-

---

* K adds इति। † S and K तत्रास्रवैः। ‡ VI. 16.
§ B नाप्युद्वर्तिता नारकदेवेषूपपद्यन्ते। || VI. 20. ¶ K तिर्यग्योनिमनुष्येषु।
** K adds च। †† A adds. नदी। ‡‡ K तटाक। §§ K ॰कायश्च॰।

---

१ S. अनुक्ता तु प्रथमप्रतरादिभेदेन। प्रथमप्रतिप्रतरस्थितिपरिज्ञानाय विशेषार्थिना नरकेन्द्रिका समालोकनीया॥

२ अधस्तनीषु षट्स्वपि भूमिषु रत्नप्रभावर्ज्यं द्वीपादिविनिवेशाः सन्ति न सन्तीत्याह। S.

दयस्तिर्यग्योनिजा मनुष्या देवाश्चतुर्निकाया अपि न सन्ति । अन्यत्र समुद्घातोपपातविक्रिया*साङ्गतिक[१]नरकपालेभ्यः । उपपाततस्तु देवा रत्नप्रभायामेव सन्ति† नान्यासु । गतिस्तृतीयां यावत् ॥

यच्च वायव आपो धारयन्ति न च विष्वग्गच्छन्त्यापश्च पृथिवीं धारयन्ति न च प्रस्पन्दन्ते पृथिव्यश्चाप्सु विलयं न गच्छन्ति तत्तस्यानादिपारिणामिकस्य नित्यसन्ततेर्लोकविनिवेशस्य लोकस्थितिरेव हेतुर्भवति ॥

अत्राह । उक्तं भवता लोकाकाशे ऽवगाहः‡ । तदनन्तरं ऊर्ध्वं गच्छत्या लोकान्तादिति§ । तत्र लोकः कः कतिविधो वा किंसंस्थितो वेति । अत्रोच्यते ॥

पञ्चास्तिकायसमुदायो लोकः । ते चास्तिकायाः स्वतत्त्वतो विधानतो लक्षणतश्चोक्ता वक्ष्यन्ते च । स‖ लोकः क्षेत्रविभागेन त्रिविधो ऽधस्तिर्यगूर्ध्वं¶ चेति । धर्माधर्मास्तिकायौ लोकव्यवस्थाहेतू । तयोरवगाह**विशेषाल्लोकानुभावनियमात्†† सुप्रतिष्ठक‡‡

* K विक्रिय ।　† K omits this whole　‡ V. 12.　§ X. 5.

‖ K adds च ।　¶ K रूर्ध्वंचेति ।　** K अवगाहन ।

†† B निततात् ।　‡‡ B सुप्रतिष्ठकं ।

१ S. साङ्गतिकाः पूर्वजन्ममित्रादयः । नरकपालाः परमाधार्मिकाः । एते सर्वे ऽपि द्वितीयादिषु भूमिषु कदाचित्केचित्संभवेयुरपीति ॥

वज्राकृतिर्लोकः[१]। अधोलोको गोकन्धराधरार्धाकृतिः। उक्तं ह्येतत्। भूमयः सप्ताधो ऽधः पृथुतराश्छत्रातिच्छत्रसंस्थिता इति [III. १] ता यथोक्ताः। तिर्यग्लोको झल्लर्याकृतिः। ऊर्ध्वलोको मृदङ्गाकृतिरिति। तत्र तिर्यग्लोकप्रसिद्ध्यर्थमिदमाकृतिमात्र[२]मुच्यते ॥

## जम्बूद्वीपलवणादयः शुभनामानो द्वीपसमुद्राः ॥ ७ ॥

जम्बूद्वीपादयो द्वीपा लवणादयश्च समुद्राः शुभनामान इति। यावन्ति लोके शुभानि नामानि तन्नामान इत्यर्थः। शुभान्येव वा नामान्येषामिति ते शुभनामानः। द्वीपादनन्तरः समुद्रः समुद्रादनन्तरो द्वीपो* यथासङ्ख्यम्। तद्यथा। जम्बूद्वीपो द्वीपो लवणोदः समुद्रः धातकीखण्डो द्वीपः कालोदः समुद्रः पुष्करवरो द्वीपः पुष्करोदः समुद्रः वरुणवरो द्वीपो वरुणोदः समुद्रः क्षीरवरो द्वीपः क्षीरोदः†समुद्रो घृतवरो द्वीपो घृतोदः समुद्रः इक्षुवरो द्वीप इक्षुवरोदः समुद्रः नन्दीश्वरो‡ द्वीपो नन्दीश्वर-

* K adds इति। † K क्षीरवरोदः। ‡ K नन्दीश्वरवरो D नन्दश्वरोदः।

१ S. लोकसंस्थानस्य सन्निवेशो ऽमुनैव सूरिणा प्रकरणान्तरे ऽभिहितस्तद्यथा Here quotes verses 210 and 211 of प्रशमरति।

२ S. मात्रशब्दः संक्षेपाभिधानार्थः केनचिल्लेशोद्देशेन न पुनर्विस्तरेणेति। विस्तरो द्वीपसागरप्रज्ञप्त्यादिभ्यो ऽवगन्तव्य इत्यावेदयति ॥

वरोदः समुद्रः अरुणवरो द्वीपो ऽरुणवरोदः समुद्र इत्येवमसङ्ख्येया* द्वीपसमुद्राः स्वयम्भू†रमणपर्यन्ता वेदितव्या इति ॥

**द्विर्द्विर्विष्कम्भाः पूर्वपूर्वपरिक्षेपिणो वलयाकृतयः ॥ ८ ॥**

सर्वे चैते द्वीपसमुद्रा यथाक्रममादितो द्विर्द्विर्विष्कम्भाः पूर्वपूर्वपरिक्षेपिणो वलयाकृतयः प्रत्येतव्याः । तद्यथा । योजनशतसहस्रविष्कम्भो जम्बूद्वीपस्य वक्ष्यते‡ । तद्द्विगुणो लवणजलसमुद्रस्य । लवणजलसमुद्रविष्कम्भाद्द्विगुणो धातकीखण्डद्वीपस्य । इत्येवमा स्वयम्भूरमणसमुद्रादिति ॥

पूर्वपूर्वपरिक्षेपिणः । सर्वे पूर्वपूर्वपरिक्षेपिणः प्रत्येतव्याः । जम्बूद्वीपो लवणसमुद्रेण§ परिक्षिप्तः । लवणजलसमुद्रो धातकीखण्डेन परिक्षिप्तः । धातकीखण्डद्वीपः कालोदसमुद्रेण परिक्षिप्तः । कालोदसमुद्रः पुष्करवरद्वीपार्धेन परिक्षिप्तः । पुष्करद्वीपार्धं मानुषोत्तरेण पर्वतेन परिक्षिप्तम् । पुष्करवरद्वीपः पुष्करवरोदेन समुद्रेण परिक्षिप्तः । एवमा स्वयम्भूरमणात्समुद्रादिति ॥

वलयाकृतयः । सर्वे च ते वलयाकृतयः सह मानुषोत्तरेणेति ॥

**तन्मध्ये मेरुनाभिर्वृत्तो योजनशतसहस्रविष्कम्भो जम्बूद्वीपः ॥ ९ ॥**

---

* K असङ्ख्याता ।

† K स्वयम्भु here and elsewhere.

‡ III 9.

§ K लवणजलसमुद्रेन ।

तेषां द्वीपसमुद्राणां मध्ये तन्मध्ये ॥ मेरुनाभिः । मेरुरस्य नाभ्यामिति मेरुर्वास्य नाभिरिति मेरुनाभिः । मेरुरस्य मध्य इत्यर्थः ॥ सर्वद्वीपसमुद्राभ्यन्तरो वृत्तः* कुलालचक्राकृतिर्योजनशतसहस्रविष्कम्भो जम्बूद्वीपः । वृत्तग्रहणं नियमार्थम् । लवणादयो वलयवृत्ता जम्बूद्वीपस्तु प्रतरवृत्त इति । यथा गम्येत वलयाकृतिभिश्चतुरस्रत्र्यस्रयोरपि परिक्षेपो विद्यते तथा च मा भूदिति ॥

मेरुरपि† काञ्चनस्थालनाभिरिव वृत्तो योजनसहस्रमधो धरणितलमवगाढो नवनवत्युच्छ्रितो दशाधो विस्तृतः सहस्रमुपरीति । त्रिकाण्डस्त्रिलोकप्रविभक्तमूर्तिश्चतुर्भिर्वनैर्भद्रशाल‡नन्दनसौमनस§पाण्डकैः परिवृत्तः । तत्र शुद्धपृथिव्युपलवज्रशर्कराबहुलं योजनसहस्रमेकं प्रथमं काण्डम् । द्वितीयं त्रिषष्टिसहस्राणि रजतजातरूपाङ्कस्फटिकबहुलम् । तृतीयं षट्त्रिंशत्सहस्राणि जम्बूनद||बहुलम् । वैडूर्यबहुला¶ चास्य चूलिका चत्वारिंशद्योजनान्युच्छ्रायेण मूले द्वादश विष्कम्भेण मध्ये ऽष्टावुपरि चत्वारीति । मूले वलयपरिक्षेपि भद्रशालवनम् । भद्रशालवनात्पञ्च योजनशतान्यारुह्य तावत्प्रतिक्रान्तिविस्तृतं नन्दनम् । ततो ऽर्धत्रिषष्टिसहस्राण्यारुह्य पञ्चयोजनशतप्रतिक्रान्तिविस्तृतमेव** सौमनसम् । ततो ऽपि षट्त्रिंशत्सहस्राण्यारुह्य चतुर्नवति-

* K निवृत्तो ।   † K adds च ।   ‡ K भद्रसाल ।
§ B सौमनष ।   || K. S. B. जाम्बू० ।   ¶ B वैदूर्यपुद्गला ।
** K विस्तृतिम् ।

**लिङ्गं** स्त्रीपुंनपुंसकानि । प्रत्युत्पन्नभावप्रज्ञापनीयस्यावेदः सिध्यति । पूर्वभावप्रज्ञापनीयस्यानन्तरपश्चात्कृतगतिकस्य परम्परपश्चात्कृतगतिकस्य[*] च त्रिभ्यो लिङ्गेभ्यः सिध्यति ॥

**तीर्थम्** । सन्ति तीर्थकरसिद्धाः तीर्थकरतीर्थे नोतीर्थकरसिद्धाः तीर्थकरतीर्थे ऽतीर्थकरसिद्धाः तीर्थकरतीर्थे । एवं तीर्थकरीतीर्थे सिद्धा अपि ॥

**लिङ्गे**[†] पुनरन्यो[‡] विकल्प उच्यते । [1]द्रव्यलिङ्गं भावलिङ्गमलिङ्गमिति प्रत्युत्पन्नभावप्रज्ञापनीयस्यालिङ्गः सिध्यति । पूर्वभावप्रज्ञापनीयस्य भावलिङ्गं प्रति स्वलिङ्गे सिध्यति । द्रव्यलिङ्गं त्रिविधं स्वलिङ्गमन्यलिङ्गं गृहिलिङ्गमिति[§] तत्प्रति भाज्यम् । सर्वस्तु भावलिङ्गं प्राप्तः सिध्यति[||] ॥[2]

**चारित्रम्** । प्रत्युत्पन्नभावप्रज्ञापनीयस्य नोचारित्री नोऽचारित्री सिध्यति[¶] । पूर्वभावप्रज्ञापनीयो द्विविधः अनन्तरपश्चात्कृतिकश्च परम्परपश्चात्कृतिकश्च । अनन्तरपश्चात्कृतिकस्य यथाख्यातसंयतः सिध्यति । परम्परपश्चात्कृतिकस्य व्यञ्जिते

---

* D एकान्तरपश्चात्कृत० । † C omits. ‡ C अन्यो ऽपि ।
§ D गृहस्थलिङ्गमिति । || K सर्वतस्तु भावलिङ्गं प्राप्तः सिध्यति ।
¶ C adds इति ।

---

१ S. H. लिङ्गेष पुनरन्यो विकल्प उच्यते । ननु च पूर्वमेवोपन्यसनीयः स्यात् । सत्यमेवं क्षम्यतामिदमेकमाचार्यस्य ॥

२ S. संक्षेपतस्तु सर्वो भावलिङ्गं प्राप्तः सिध्यतीति नियमः ।

ऽव्यञ्जिते* च । अव्यञ्जिते चिचारिचपश्चात्कृतश्चतुश्चारिचपश्चात्कृतः पञ्चचारित्रपश्चात्कृतश्च । व्यञ्जिते सामायिकसूक्ष्मसांपरायिकयथाख्यातपश्चात्कृतसिद्धाः† छेदोपस्थाप्यसूक्ष्मसम्पराययथाख्यातपश्चात्कृतसिद्धाः सामायिकच्छेदोपस्थाप्यसूक्ष्मसम्परायथाख्यातपश्चात्कृतसिद्धाः‡ छेदोपस्थाप्यपरिहारविशुद्धिसूक्ष्मसम्परायथाख्यातपश्चात्कृतसिद्धाः सामायिकच्छेदोपस्थाप्यपरिहारविशुद्धिसूक्ष्मसम्परायथाख्यातपश्चात्कृतसिद्धाः ॥

**प्रत्येकबुद्धबोधितः**[१] । अस्य व्याख्याविकल्पश्चतुर्विधः । तद्यथा । अस्ति स्वयंबुद्धसिद्धः । स द्विविधः अर्हंश्च तीर्थकरः प्रत्येकबुद्धसिद्धश्च । बुद्धबोधितसिद्धाः§ चिचतुर्थो विकल्पः परबोधकसिद्धाः स्वेष्टकारिसिद्धाः|| ॥

**ज्ञानम्** । अत्र प्रत्युत्पन्नभावप्रज्ञापनीयस्य केवली सिध्यति । पूर्वभावप्रज्ञापनीयो द्विविधः अनन्तरपश्चात्कृतिकश्च परम्परपश्चात्कृतिकश्च अव्यञ्जिते च व्यञ्जिते च । अव्यञ्जिते द्वाभ्यां ज्ञानाभ्यां सिध्यति । चिभिश्चतुर्भिरिति । व्यञ्जिते द्वाभ्यां मतिश्रुताभ्याम् । त्रिभिर्मतिश्रुतावधिभिर्मतिश्रुतमनःपर्यायैर्वा । चतुर्भिर्मतिश्रुतावधिमनःपर्यायैरिति ॥

---

* C व्यंजिते चाव्यंजिते च ।　　† C हृते ।

‡ D has परिहारविशुद्धि for छेदोपस्थाप्य ।　　§ D ०सिद्धः ।

|| D परबोधकः स्वेष्टकारि च ।

---

१ S तीर्थंकर, प्रत्येकबुद्ध, परबोधक, स्वेष्टकारी ।

**अवगाहना**। कः कस्यां शरीरावगाहनायां वर्तमानः सिध्यति। अवगाहना द्विविधा उत्कृष्टा जघन्या च। उत्कृष्टा* पञ्चधनुःशतानि धनुः†पृथक्त्वेनाभ्यधिकानि। जघन्या सप्त रत्नयो ऽङ्गुलपृथक्त्वेन‡ हीनाः। एतासु शरीरावगाहनासु सिध्यति पूर्वभावप्रज्ञापनीयस्य। प्रत्युत्पन्नभावप्रज्ञापनीयस्य तु§ एतास्वेव यथास्वं त्रिभागहीनासु सिध्यति॥

**अन्तरम्**। सिध्यमानानां किमन्तरम्। अनन्तरं च सिध्यन्ति सान्तरं च सिध्यन्ति। तत्रानन्तरं जघन्येन द्वौ समयौ उत्कृष्टेनाष्टौ समयान्। सान्तरं जघन्येनैकं समयं उत्कृष्टेन षण्मासा इति‖ ॥

**सङ्ख्या**। कत्येकसमये सिध्यन्ति। जघन्येनैक उत्कृष्टेनाष्टशतम्॥

**अल्पबहुत्वम्**। एषां क्षेत्रादीनामेकादशानामनुयोगद्वाराणामल्पबहुत्वं वाच्यं। तद्यथा।

क्षेत्रसिद्धानां जन्मतः संहरणतश्च कर्मभूमिसिद्धाश्चाकर्मभूमिसिद्धाश्च सर्वस्तोकाः संहरणसिद्धाः जन्मतो ऽसङ्ख्येयगुणाः। संहरणं द्विविधम् परकृतं स्वयंकृतं च। परकृतं देवकर्मणा चारण¶विद्याधरैश्च। स्वयंकृतं चारणविद्याधराणामेव। एषां च क्षेत्राणां विभागः कर्मभूमिरकर्मभूमिः समुद्रा द्वीपा उर्ध्वमधस्तिर्यगिति लोकत्रयं। तत्र सर्वस्तोका ऊर्ध्वलोकसिद्धाः अधोलोकसिद्धाः सङ्ख्येयगुणाः तिर्यग्लोकसिद्धाः

* C उत्कृष्टायाम्।
† K omits धनः।
‡ C अङ्गुलपृथक्त्वहीनाः।
§ C omits तु।
‖ D षण्मासानिति।
¶ C चारिणा।

सङ्ख्येयगुणाः सर्वस्तोकाः समुद्रसिद्धाः द्वीपसिद्धाः सङ्ख्येयगुणाः* । एवं तावदव्यञ्जिते† व्यञ्जितेऽपि सर्वस्तोका लवणसिद्धाः कालोदसिद्धाः‡ सङ्ख्येयगुणा जम्बूद्वीपसिद्धाः सङ्ख्येयगुणा धातकीखण्डसिद्धाः सङ्ख्येयगुणाः पुष्करार्धसिद्धाः सङ्ख्येयगुणा इति ॥

**काल** इति त्रिविधो विभागो भवति अवसर्पिणी उत्सर्पिणी अनवसर्पिण्युत्सर्पिणीति। अत्र सिद्धानां (व्यञ्जितानां) व्यञ्जिताव्यञ्जितविशेषयुक्तो ऽल्पबहुत्वानुगमः कर्तव्यः । पूर्वभावप्रज्ञापनीयस्य सर्वस्तोका उत्सर्पिणीसिद्धा अवसर्पिणीसिद्धा विशेषाधिका अनवसर्पिण्युत्सर्पिणीसिद्धाः सङ्ख्येयगुणा इति । प्रत्युत्पन्नभावप्रज्ञापनीयस्याकाले सिध्यति । नास्त्यल्पबहुत्वम् ।

**गतिः** । प्रत्युत्पन्नभावप्रज्ञापनीयस्य सिद्धिगतौ सिध्यति । नास्त्यल्पबहुत्वम् । पूर्वभावप्रज्ञापनीयस्यानन्तरपश्चात्कृतिकस्य मनुष्यगतौ सिध्यति । नास्त्यल्पबहुत्वम् । परम्परपश्चात्कृतिकस्यानन्तरा गतिश्चिन्त्यते । तद्यथा । सर्वस्तोकास्तिर्यग्योन्यनन्तरगतिसिद्धा मनुष्येभ्यो ऽनन्तरगतिसिद्धाः सङ्ख्येयगुणा नारकेभ्यो ऽनन्तरगतिसिद्धाः सङ्ख्येयगुणा देवेभ्यो ऽनन्तरगतिसिद्धाः सङ्ख्येयगुणा इति ॥

**लिङ्गम्** । प्रत्युत्पन्नभावप्रज्ञापनीयस्य व्यपगतवेदः सिध्यति । नास्त्यल्पबहुत्वम् । पूर्वभावप्रज्ञापनीयस्य सर्वस्तोका नपुंसकलिङ्गसिद्धाः स्त्रीलिङ्गसिद्धाः सङ्ख्येयगुणाः पुल्लिँङ्गसिद्धाः सङ्ख्येयगुणा इति ॥

---

* D असङ्ख्येयगुणाः ।    † C adds व्यञ्जिते ।    ‡ K कालोयनसिद्धाः ।

**तीर्थम्** । सर्वस्तोकाः तीर्थकरसिद्धाः तीर्थकरतीर्थे नोतीर्थकरसिद्धाः सङ्ख्येयगुणा इति । तीर्थकरतीर्थसिद्धा नपुंसकाः सङ्ख्येयगुणाः । तीर्थकरतीर्थसिद्धाः स्त्रियः सङ्ख्येयगुणाः । तीर्थकरतीर्थसिद्धा पुमांसः सङ्ख्येयगुणा इति ॥

**चारित्रम्** । अत्रापि नयौ द्वौ प्रत्युत्पन्नभावप्रज्ञापनीयस्य पूर्वभावप्रज्ञापनीयस्य । प्रत्युत्पन्नभावप्रज्ञापनीयस्य नोचारित्री नोअचारित्री* सिध्यति । नास्त्यल्पबहुत्वम् । पूर्वभावप्रज्ञापनीयस्य व्यञ्जिते चाव्यञ्जिते च । अव्यञ्जिते सर्वस्तोकाः पञ्चचारित्रसिद्धाश्चतुश्चारित्रसिद्धाः सङ्ख्येयगुणास्त्रिचारित्रसिद्धाः सङ्ख्येयगुणाः । व्यञ्जिते सर्वस्तोकाः सामायिकच्छेदोपस्थाप्यपरिहारविशुद्धिसूक्ष्मसम्पराययथाख्यातचारित्रसिद्धाः छेदोपस्थाप्यपरिहारविशुद्धिसूक्ष्मसम्पराययथाख्यातचारित्रसिद्धाः सङ्ख्येयगुणाः सामायिकच्छेदोपस्थाप्यसूक्ष्मसम्पराययथाख्यातचारित्रसिद्धाः सङ्ख्येयगुणाः सामायिकपरिहारविशुद्धिसूक्ष्मसम्पराययथाख्यातसिद्धाः सङ्ख्येयगुणाः सामायिकसूक्ष्मसम्पराययथाख्यातचारित्रसिद्धाः सङ्ख्येयगुणाः । छेदोपस्थाप्यसूक्ष्मसम्पराययथाख्यातचारित्रसिद्धाः सङ्ख्येयगुणाः ।

**प्रत्येकबुद्धबोधितः** । सर्वस्तोकाः प्रत्येकबुद्धसिद्धाः । बुद्धबोधितसिद्धाः नपुंसकाः सङ्ख्येयगुणाः । बुद्धबोधितसिद्धाः स्त्रियः सङ्ख्येयगुणाः । बुद्धबोधितसिद्धाः पुमांसः सङ्ख्येयगुणा इति ।

---

* D omits.

**ज्ञानम्** । कः केन ज्ञानेन युक्तः सिध्यति । प्रत्युत्पन्नभावप्रज्ञापनीयस्य सर्वः केवली सिध्यति । नास्त्यल्पबहुत्वम् । पूर्वभावप्रज्ञापनीयस्य सर्वस्तोका द्विज्ञानसिद्धाः चतुर्ज्ञानसिद्धाः सङ्ख्येयगुणाः त्रिज्ञानसिद्धाः सङ्ख्येयगुणाः । एवं तावदव्यञ्जिते व्यञ्जिते ऽपि सर्वस्तोका मतिश्रुतज्ञानसिद्धाः मतिश्रुतावधिमनःपर्यायज्ञानसिद्धाः सङ्ख्येयगुणाः मतिश्रुतावधिज्ञानसिद्धाः सङ्ख्येयगुणाः ॥

**अवगाहना** । सर्वस्तोका जघन्यावगाहनासिद्धाः उत्कृष्टावगाहनासिद्धास्ततो ऽसङ्ख्येयगुणाः यवमध्यसिद्धा असङ्ख्येयगुणाः यवमध्योपरिसिद्धा असङ्ख्येयगुणाः यवमध्याधस्तात्सिद्धा विशेषाधिकाः सर्वे विशेषाधिकाः ॥

**अन्तरम्** । सर्वस्तोका अष्टसमयानन्तरसिद्धाः सप्तसमयानन्तरसिद्धाः षट्समयानन्तरसिद्धा इत्येवं यावद्विसमयानन्तरसिद्धा इति सङ्ख्येयगुणाः । एवं तावदनन्तरेषु सान्तरेष्वपि सर्वस्तोकाः षण्मासान्तरसिद्धाः एकसमयान्तरसिद्धाः सङ्ख्येयगुणाः यवमध्यान्तरसिद्धाः सङ्ख्येयगुणाः अधस्ताद्यवमध्यान्तरसिद्धा असङ्ख्येयगुणाः उपरियवमध्यान्तरसिद्धा विशेषाधिकाः सर्वे विशेषाधिकाः ॥

**सङ्ख्या** । सर्वस्तोका अष्टोत्तरशतसिद्धाः विपरीतक्रमात्सप्तोत्तरशतसिद्धादयो यावत्पञ्चाशत् इत्यनन्तगुणाः । एकोनपञ्चाशदादयो* यावत्पञ्चविंशतिरित्यसङ्ख्येयगुणाः । चतुर्विंश-

* D एकोनपञ्चाशदादितो ।

त्यादयो यावदेक इति सङ्ख्येयगुणाः । विपरीतहानिर्यथा । सर्वस्तोका अनन्तगुणहानिसिद्धा असङ्ख्येयगुणहानिसिद्धा अनन्तगुणाः सङ्ख्येयगुणहानिसिद्धाः सङ्ख्येयगुणा इति ॥

एवं निसर्गाधिगमयोरन्यतरजं तत्त्वार्थश्रद्धानात्मकं शङ्काद्यतिचारवियुक्तं प्रशमसंवेगनिर्वेदानुकम्पास्तिक्याभिव्यक्तिलक्षणं विशुद्धं सम्यग्दर्शनमवाप्य सम्यग्दर्शनोपलम्भाद्विशुद्धं* च ज्ञानमधिगम्य निक्षेपप्रमाणनयनिर्देशस†त्सङ्ख्यादिभिरभ्युपायैर्जीवादीनां तत्त्वानां पारिणामिकौदयिकौपशमिकक्षायोपशमिकक्षायिकानां भावानां स्वतत्त्वं विदित्वादिमत्पारिणामिकौदयिकानां च भावानामुत्पत्तिस्थित्यन्यतानुग्रहप्रलयतत्त्वज्ञो विरक्तो निस्तृष्ण‡स्त्रिगुप्तः पञ्चसमितो दशलक्षणधर्मानुष्ठानात्फलदर्शनाच्च निर्वाणप्राप्तियतनयाभिवर्धितश्रद्धासंवेगो भावनाभिर्भावितात्मानुप्रेक्षाभिः स्थिरीकृतात्मानभिष्वङ्गः संवृतत्वान्निरास्रवत्वा§द्विरक्तत्वान्निस्तृष्णत्वाच्च व्यपगताभिनवकर्मोपचयः परीषहजयाद्बाह्याभ्यन्तर‖तपोनुष्ठानादनुभावतश्च¶ सम्यग्दृष्टिविरतादीनां च जिनपर्यन्तानां परिणामाध्यवसाय**विशुद्धिस्थानान्तराणामसङ्ख्येयगुणोत्कर्षप्राप्त्या पूर्वोपचितकर्म निर्जरयन्†† सामायिकादीनां च सूक्ष्मसम्परायान्तानां संयमविशुद्धिस्थानानामुत्तरो‡‡त्तरोपलम्भात्पुलाकादीनां

---

* K त्वम्भादिशुद्धम् ।

† K तत् for सत् ।

‡ D निष्टष्णः K, निस्तृष्णः ।

§ D निराश्रयत्वात् ।

‖ K न्तरयोरनु० ।

¶ K अनभव ।

** K अध्यवसान ।

†† D निर्जरायाः ।

‡‡ C उत्तर only once.

च निर्ग्रन्थानां संयमा*नुपालनविशुद्धिस्थान†विशेषाणा‡मुत्तरोत्तरप्रतिपत्त्या घटमानो ऽत्यन्तप्रहीणार्तरौद्रध्यानो धर्मध्यानविजयादवाप्तसमाधिबलः शुक्लध्यानयोश्च पृथक्त्वैकत्ववितर्कयोरन्यतरस्मिन्वर्तमानो नानाविधानृद्धिविशेषान्प्राप्नोति । तद्यथा ।

आमर्शौषधित्वं विप्रुडौषधित्वं§ सर्वौषधित्वं शापानुग्रहसामर्थ्यजननीमभिव्याहारसिद्धिमीशित्वं|| वशित्वमवधिज्ञानं शारीरविकर¶णाङ्गप्राप्तितामणिमानं लघिमानं महिमानमणुत्वम् । अणिमा बिसच्छि**द्रमपि प्रविशेदिति†† । लघुत्वं नाम लघिमा वायोरपि लघुतरः स्यात् । महत्त्वं महिमा मेरोरपि महत्तरं शरीरं विकुर्वीत । प्राप्तिर्भूमिष्ठो ऽङ्गुल्यग्रेण मेरुशिखरभास्करादीनपि स्पृशेत् । प्राकाम्यमप्सु‡‡ भूमाविव गच्छेत् भूमावप्स्विव निमज्जेदुन्मज्जेच्च । जङ्घाचारणत्वं येनाग्निशिखाधूमनीहारावश्यायमेघवारिधारामर्कटतन्तु§§ज्योतिष्करश्मिवायूनामन्यतममप्युपादाय|||| वियति गच्छेत्¶¶ । वियद्गतिचारणत्वं येन वियति भूमाविव गच्छेत् शकुनिवच्च प्रडीनावडीन***गमनानि कुर्यात् । अप्रतिघातित्वं पर्वतमध्येन वियतीव गच्छेत् । अन्तर्धानमदृश्यो भवेत् । कामरूपित्वं नानाश्रयानेकरूपधारणं युगपदपि

* K संयतातपा ।
† K स्थापन ।
‡ K विशेषेणा ।
§ D विप्रुडोषधित्वम् ।
|| D अभिव्याहर ।
¶ KD शारीरी च विकर० ।
** C श्याणो ।
†† D प्रविश्यामीति ।
‡‡ C ०मभूमामिव गच्छेत्, D प्राक्काम्य० ।
§§ D मकटकतन्तु ।
|||| D अभ्यपादापाय ।
¶¶ C गच्छति ।
*** K लीन ।

कुर्यात् तेजोनिसर्गसामर्थ्यमित्येतदादि ॥ इति* इन्द्रियेषु मतिज्ञानविशुद्धिविशेषाद्दूरात्स्पर्शनास्वादनघ्राणदर्शनश्रवणानि विषयाणां कुर्यात्। संभिन्नज्ञानत्वं युगपदनेकविषयपरिज्ञानमित्येतदादि ॥ मानसं कोष्ठबुद्धित्वं बीजबुद्धित्वं पदप्रकरणोद्देशाध्यायप्राभृतवस्तुपूर्वाङ्गानुसारित्वमृजुमतित्वं विपुलमतित्वं परचित्तज्ञानमभिलषितार्थप्राप्तिमनिष्टानवाप्तीत्येतदादि ॥ वाचिकं क्षीरास्रवित्वं मध्वास्रवित्वं वादित्वं सर्वरुतज्ञत्वं† सर्वसत्त्वावबोध‡नमित्येतदादि। तथा विद्याधरत्वमाशीविषत्वं भिन्नाभिन्नाक्षरचतुर्दशपूर्वधरत्वमिति ॥

ततोऽस्य निस्तृष्णत्वात्तेष्व§नभिष्वक्तस्य मोहक्षपक||परिणामावस्थस्याष्टाविंशतिविधं मोहनीयं निरवशेषतः प्रक्षीयते। ततश्छद्मस्थवीतरागत्वं प्राप्तस्यान्तर्मुहूर्तेन ज्ञानावरणदर्शनावरणान्तरायाणि युगपदशेषतः प्रक्षीयन्ते। ततः संसारबीजबन्धनिर्मुक्तः¶ फलबन्धनमोक्षापेक्षो यथाख्यातसंयतो जिनः केवली सर्वज्ञः सर्वदर्शी शुद्धो बुद्धः कृतकृत्यः स्नातको भवति। ततो वेदनीयनामगोत्रायुष्कक्षयात्फलबन्धननिर्मुक्तो निर्दग्धपूर्वोपात्तेन्धनो निरुपादान इवाग्निः पूर्वोपात्तभववियोगाद्धेत्वभावाच्चोत्तरस्याप्रादुर्भावाच्छान्तः संसारसुखमतीत्यात्यन्तिकमैकान्तिकं निरुपमं निरतिशयं नित्यं निर्वाणसुखमवाप्नोतीति** ॥

---

* KD omit. † K सर्वज्ञ। ‡ C सर्वतत्त्वावबोधनम्, सर्वसत्त्वानुबोधनम्।

§ D ष्वनभिषक्तस्य, K ॰त्वत्तन्वेष्वनभि। || D क्षय for क्षपक।

¶ D बन्धन for बन्ध, C निर्युक्तः। ** K omits इति।

एवं तत्त्वपरिज्ञानाद्विरक्तस्यात्मनो भृशम् ।
निरास्रवत्वाच्छिन्नायां नवायां कर्मसन्ततौ ॥१॥
पूर्वार्जितं क्षपयतो यथोक्तैः क्षयहेतुभिः ।
संसारबीजं कार्त्स्न्येन मोहनीयं प्रहीयते ॥२॥
ततो ऽन्तरायज्ञानघ्नदर्शनघ्नान्यनन्तरम् ।
प्रहीयन्ते ऽस्य युगपत् त्रीणि कर्माण्यशेषतः ॥३॥
गर्भसूच्यां विनष्टायां यथा तालो विनश्यति ।
तथा कर्म क्षयं याति मोहनीये क्षयं गते ॥४॥
ततः क्षीणचतुःकर्मा प्राप्तो ऽयाख्यातसंयमम् ।
बीजबन्धननिर्मुक्तः स्नातकः परमेश्वरः ॥५॥
शेषकर्मफलापेक्षः शुद्धो बुद्धो निरामयः ।
सर्वज्ञः सर्वदर्शी च जिनो भवति केवली ॥६॥
कृत्स्नकर्मक्षयादूर्ध्वं निर्वाणमधिगच्छति ।
यथा दग्धेन्धनो वह्निर्निरुपादानसन्ततिः ॥७॥
दग्धे बीजे यथात्यन्तं प्रादुर्भवति नाङ्कुरः ।
कर्मबीजे तथा दग्धे नारोहति* भवाङ्कुरः ॥८॥
तदनन्तरमेवोर्ध्वमालोकान्तात्स गच्छति ।
पूर्वप्रयोगासङ्गत्वबन्धच्छेदोर्ध्वगौरवैः ॥९॥
कुलालचक्रे दोलायामिषौ चापि† यथेष्यते ।
पूर्वप्रयोगात्कर्मेह तथा सिद्धिगतिः स्मृता‡ ॥१०॥

---

* D न रोहति । † DC वापि । ‡ D स्मृताः ।

मृल्लेपसङ्गनिर्मोक्षाद्यथा दृष्टाप्स्वलाबुनः ।
कर्मसङ्गविनिर्मोक्षात्तथा सिद्धिगतिः स्मृता* ॥ ११ ॥
एरण्डयन्त्रपेडासु बन्धच्छेदाद्यथा गतिः ।
कर्मबन्धनविच्छेदात्सिद्धस्यापि तथेष्यते ॥ १२ ॥
ऊर्ध्वगौरवधर्माणो जीवा इति जिनोत्तमैः ।
अधोगौरवधर्माणः पुद्गला इति चोदितम् ॥ १३ ॥
यथाधस्तिर्यगूर्ध्वं च लोष्टवाय्वग्निवीतयः† ।
स्वभावतः प्रवर्तन्ते तथोर्ध्वं गतिरात्मनाम्‡ ॥ १४ ॥
अतस्तु गतिवैकृत्यमेषां यदुपलभ्यते ।
कर्मणः प्रतिघाताच्च प्रयोगाच्च तदिष्यते ॥ १५ ॥
अधस्तिर्यगथोर्ध्वं च§ जीवानां कर्मजा गतिः ।
ऊर्ध्वमेव तु तद्धर्मा भवति क्षीणकर्मणाम् ॥ १६ ॥
द्रव्यस्य कर्मणो यद्वदुत्पत्त्यारम्भवीतयः ।
समं तथैव सिद्धस्य गतिमोक्षभवक्षयाः ॥ १७ ॥
उत्पत्तिश्च विनाशश्च प्रकाशतमसोरिह ।
युगपद्भवतो यद्वत् तथा निर्वाणकर्मणोः ॥ १८ ॥
तन्वी मनोज्ञा सुरभिः पुण्या परमभास्वरा ।
प्राग्भारा नाम वसुधा लोकमूर्ध्नि व्यवस्थिता ॥ १९ ॥
नृलोकतुल्यविष्कम्भा सितच्छत्रनिभा शुभा ।
ऊर्ध्वं तस्याः क्षितेः|| सिद्धा लोकान्ते समवस्थिताः ॥ २० ॥

---

* D सिद्धगतिः स्मृताः । † D वीचयः । ‡ D स्वात्मनः ।
§ D च अधस्तिर्यग् चोर्ध्वं च । || D त्ववेः ।

तादात्म्यादुपयुक्तास्ते केवलज्ञानदर्शनैः* ।
सम्यक्त्व†सिद्धतावस्था हेत्वभावाच्च निष्क्रियाः ॥२१॥
ततो ऽप्यूर्ध्वं गतिस्तेषां कस्मान्नास्तीति चेन्मतिः ।
धर्मास्तिकायस्याभावात्स हि हेतुर्गतेः परः‡ ॥२२॥
संसारविषयातीतं मुक्तानामव्ययं सुखम् ।
अव्याबाधमिति प्रोक्तं परमं परमर्षिभिः ॥२३॥
स्यादेतदशरीरस्य जन्तोर्नष्टाष्टकर्मणः ।
कथं भवति मुक्तस्य सुखमित्यत्र मे§ शृणु ॥२४॥
लोके चतुर्ष्विहार्थेषु सुखशब्दः प्रयुज्यते ।
विषये वेदनाभावे विपाके मोक्ष एव च ॥२५॥
सुखो वह्निः सुखो वायुर्विषयेष्विह कथ्यते ।
दुःखाभावे च पुरुषः सुखितो ऽस्मीति मन्यते ॥२६॥
पुण्यकर्मविपाकाच्च सुखमिष्टेन्द्रियार्थजम्|| ।
कर्मक्लेशविमोक्षाच्च मोक्षे¶ सुखमनुत्तमम् ॥२७॥
सुखप्रसुप्तवत्केचिदिच्छन्ति परिनिर्वृतिम्** ।
तदयुक्तं क्रियावत्त्वात्सुखानुशयतस्तथा†† ॥२८॥
श्रमक्लममदव्याधि‡‡ मदनेभ्यश्च सम्भवात् ।
मोहोत्पत्तेर्विपाकाच्च§§ दर्शनघ्नस्य कर्मणः ॥२९॥

---

* D केवलज्ञानदर्शनैः  † D सम्यक्त्वं° ।  ‡ CA पुरः ।
§ B स ।  || D अर्थिजं ।  ¶ D मोक्षः ।
** D निर्वृतिम् ।  †† KC स्वनशततः ।
‡‡ D मद्दव्याधि for मदव्याधि ।  §§ D मोहोत्पत्तिनिपाकाच्च ।

लोके तत्सदृशो ह्यर्थः कृत्स्नेऽप्यन्यो न विद्यते ।
उपगीयेत* तद्येन तस्मान्निरुपमं सुखम्† ॥३०॥
लिङ्गप्रसिद्धेः ‡प्रामाण्यादनुमानोपमानयोः ।
अत्यन्तं चाप्रसिद्धं तद्यत्तेनानुपमं स्मृतम् ॥३१॥
प्रत्यक्षं तद्भगवतामर्हतां तैश्च भाषितम् ।
गृह्यतेऽस्तीत्यतः प्राज्ञैर्न छद्मस्थपरीक्षया ॥३२॥ इति

यस्त्विदानीं सम्यग्दर्शनज्ञानचरणसंपन्नो भिक्षुर्मोक्षाय घटमानः कालसंहननायुर्दोषादल्पशक्तिः कर्मणां चातिगुरुत्वादकृतार्थ एवोपरमति स सौधर्मादीनां सर्वार्थसिद्धान्तानां कल्पविमानविशेषाणामन्यतमस्मिन्देवतयोपपद्यते§ । तत्र सुकृत||कर्मफलमनुभूय स्थितिक्षयात्प्रच्युतो देशजातिकुलशीलविद्याविनयविभवविषयविस्तरविभूतियुक्तेषु मनुष्येषु प्रत्यायातिमवाप्य पुनः सम्यग्दर्शनादिविशुद्धबोधिमवाप्नोति । अनेन सुखपरम्परायुक्तेन कुशलाभ्यासानुबन्धक्रमेण परं त्रिर्जनित्वा सिध्यतीति ॥

वाचकमुख्यस्य शिवश्रियः प्रकाशयशसः प्रशिष्येण ।
शिष्येण घोषनन्दिक्षमणस्यैकादशाङ्गविदः ॥१॥
वाचनया च ¶महावाचकक्षमणमुण्डपादशिष्यस्य ।
शिष्येण वाचकाचार्यमूलनाम्नः प्रथितकीर्तेः ॥२॥

---

* D उपनीयेत । † D स्मृतम् ।
‡ D प्रामाण्यं अनमान० । § देवत्वायोपपद्यते ।
|| D स्वकृत । ¶ B मुण्डा ।

न्यग्रोधिकाप्रसूतेन विहरता पुरवरे कुसुमनाम्नि ।
कौभीषणिना *स्वातितनयेन वात्सीसुतेनार्घ्यम् ॥३॥
अर्हद्वचनं सम्यग्गुरुक्रमेणागतं समुपधार्य ।
दुःखार्त्तं †च दुरागमविहतमतिं लोकमवलोक्य ॥४॥
इदमुच्चैर्नागर‡वाचकेन सत्त्वानुकम्पया दृब्धम् ।
तत्त्वार्थाधिगमाख्यं §स्पष्टमुमास्वातिना शास्त्रम् ॥५॥
यस्तत्त्वाधिगमाख्यं ज्ञास्यति च करिष्यते च तत्रोक्तम् ।
सोऽव्याबाधसुखाख्यं प्राप्स्यत्यचिरेण परमार्थम् ॥६॥

इति तत्त्वार्थाधिगमेऽर्हत्प्रवचनसङ्ग्रहे
दशमोऽध्यायः समाप्तः ॥

* C स्वातिश्रयेन, D स्वातितनयैमाया सौसुतेन । † D दुःखार्त्तकम् ।
‡ S स्वशाखासूचकम् । § D पुष्टं ।

# Appendix A.

## तत्त्वार्थाधिगमसूत्रम् ।



AN ALPHABETICAL INDEX OF SŪTRAS IN THIS WORK.

### अ ।

## आ।

## ऊ।

| अनुक्रमनम्बर। | | अध्याय। | सूत्रसङ्ख्या। | पत्रसङ्ख्या। |
|---|---|---|---|---|
| ६० | ऊर्ध्वाधस्तिर्यग्व्य० … … | ७ | २५ | १६२ |

## ऋ।

| | | | | |
|---|---|---|---|---|
| ६१ | ऋजुविपुलमती मनःपर्यायः … | १ | २४ | २४ |

## ए।

| | | | | |
|---|---|---|---|---|
| ६२ | एकप्रदेशादिषु भाज्यः० … | ५ | १४ | १२३ |
| ६३ | एकसमयो ऽविग्रहः … … | २ | ३० | ४८ |
| ६४ | एकं द्वौ वानाहारकः… … | २ | ३१ | ४८ |
| ६५ | एकादश जिने … … | ९ | ११ | १९७ |
| ६६ | एकादयो भाज्या० … … | ९ | १७ | १९८ |
| ६७ | एकादीनि भाज्यानि० … | १ | ३१ | २७ |
| ६८ | एकाश्रये सवितर्क० … … | ९ | ४३ | २०७ |

## औ।

| | | | | |
|---|---|---|---|---|
| ६९ | औदारिकवैक्रिय० … … | २ | ३७ | ५० |
| ७० | औपपातिकचरमदेहो० … | २ | ५२ | ६२ |
| ७१ | औपपातिकमनुष्येभ्यः… … | ४ | २८ | ११३ |
| ७२ | औपशमिकक्षायिकौ … | २ | १ | ३९ |
| ७३ | औपशमिकादि … … | १० | ४ | २१४ |

## क।

| | | | | |
|---|---|---|---|---|
| ७४ | कषायोदयात्ती० … … | ६ | १५ | १४५ |
| ७५ | कन्दर्पकौकुच्य० … … | ७ | २७ | १६२ |
| ७६ | कल्पोपपन्नाः० … … | ४ | १८ | १०५ |
| ७७ | कायप्रवीचारा० … … | ४ | ८ | ९५ |

| अनुक्रमनम्बर। | | अध्याय। | सूत्रसङ्ख्या। | पत्रसङ्ख्या |
|---|---|---|---|---|
| ९९ | जम्बूद्वीपलवणादयः ... | ३ | ७ | ७८ |
| १०० | जराय्वण्डपोतजानां गर्भः ... | २ | ३४ | ४८ |
| १०१ | जीवभव्याभव्यत्वादीनि च ... | २ | ७ | ४१ |
| १०२ | जीवस्य च ... ... ... | ५ | ८ | १२२ |
| १०३ | जीवाजीवास्रव० ... ... | १ | ४ | ९ |
| १०४ | जीवितमरणाशंसा० ... ... | ७ | ३२ | १६४ |
| १०५ | ज्योतिष्काः० ... ... | ४ | १३ | १०१ |
| १०६ | ज्योतिष्काणामधिकम् ... | ४ | ४८ | ११८ |

## त।

| | | | | |
|---|---|---|---|---|
| १०७ | ततश्च निर्जरा ... ... | ८ | २४ | १८० |
| १०८ | तत्कृतः कालविभागः ... ... | ४ | १५ | १०३ |
| १०९ | तत्त्वार्थश्रद्धानं सम्यग्दर्शनम् ... | १ | २ | ६ |
| ११० | तत्र्येककाययोगायोगानाम् ... | ९ | ४२ | २०७ |
| १११ | तत्प्रमाणे ... ... ... | १ | १० | १४ |
| ११२ | तत्प्रदोषनिह्नव० ... ... | ६ | ११ | १४४ |
| ११३ | तत्र भरत०... ... ... | ३ | १० | ८१ |
| ११४ | तत्स्थैर्यार्थं० ... ... | ७ | ३ | १४९ |
| ११५ | तदनन्तभागे मनःपर्यायस्य ... | १ | २९ | २६ |
| ११६ | तदनन्तरमूर्ध्वं० ... ... | १० | ५ | २१५ |
| ११७ | तदविरतदेशविरत० ... ... | ९ | ३५ | २०५ |
| ११८ | तदादीनि भाज्यानि ... ... | २ | ४४ | ५२ |
| ११९ | तदिन्द्रियानिन्द्रिय० ... ... | २ | १४ | १६ |
| १२० | तद्विभाजिनः० ... ... | ३ | ११ | ८२ |
| १२१ | तद्विपर्ययो० ... ... | ६ | २५ | १४८ |
| १२२ | तद्भावः परिणामः ... ... | ५ | ४१ | १३७ |

## द।

| अनुक्रमनम्बर | | अध्याय। | सूत्रसङ्ख्या। | पत्रसङ्ख्या। |
|---|---|---|---|---|
| १४७ | देशसर्वतो ऽणुमहती... ... | ७ | २ | १४६ |
| १४८ | द्रव्याणि जीवाश्च ... ... | ५ | २ | १२० |
| १४९ | द्रव्याश्रया निर्गुणा गुणाः ... | ५ | ४० | १३७ |
| १५० | द्विनवाष्टादश० ... .... | २ | २ | ३६ |
| १५१ | द्विर्द्विविष्कम्भाः० ... ... | ३ | ८ | ७६ |
| १५२ | द्विर्धातकीखण्डे ... ... | ३ | १२ | ८४ |
| १५३ | द्विविधानि ... ... ... | २ | १६ | ४३ |
| १५४ | द्विविधो ऽवधिः ... ... | १ | २१ | २२ |
| १५५ | द्व्यधिकादिगुणानां तु ... ... | ५ | ३५ | १३५ |

## ध।

| | | | | |
|---|---|---|---|---|
| १५६ | धर्माधर्मयोः कृत्स्ने ... ... | ५ | १३ | १२३ |

## न।

| | | | | |
|---|---|---|---|---|
| १५७ | नक्षत्राणामर्धम् ... ... | ४ | ५० | ११८ |
| १५८ | न चक्षुरनिन्द्रियाभ्याम् ... | २ | १६ | १६ |
| १५९ | न जघन्यगुणानाम् ... ... | ५ | ३३ | १३४ |
| १६० | न देवाः ... ... ... | २ | ५१ | ६२ |
| १६१ | नवचतुर्दश० ... ... | ६ | २१ | २०० |
| १६२ | नाणोः ... ... ... | ५ | ११ | १२३ |
| १६३ | नामगोत्रयोर्विंशतिः ... ... | ८ | १७ | १७६ |
| १६४ | नामगोत्रयोरष्टौ ... ... | ८ | २० | १७६ |
| १६५ | नामप्रत्ययाः० ... ... | ८ | २५ | १८१ |
| १६६ | नामस्थापनाद्रव्य० ... ... | १ | ५ | ७ |
| १६७ | नारकदेवानामुपपातः... ... | २ | ३५ | ४६ |
| १६८ | नारकसंमूर्च्छिनो नपुंसकानि ... | २ | ५० | ६१ |
| १६९ | नारकाणां च द्वितीयादिषु ... | ४ | ४३ | ११७ |

## प।

| अनुक्रमनम्बर। | | अध्याय। | सूत्रसङ्ख्या। | पत्रसङ्ख्या। |
|---|---|---|---|---|
| १९४ | पीतपद्मशुक्ललेश्या ... ... | ४ | २३ | ११० |
| १९५ | पीतान्तलेश्याः ... ... | ४ | ७ | ९५ |
| १९६ | पुलाकबकुश० ... ... | ९ | ४८ | २०९ |
| १९७ | पुष्करार्धे च ... ... | ३ | १३ | ७५ |
| १९८ | पूर्वप्रयोगादसङ्गत्वा० ... ... | १० | ६ | २१५ |
| १९९ | पूर्वयोर्द्वीन्द्राः ... ... | ४ | ६ | ९४ |
| २०० | पृथक्त्वैकत्व० ... ... | ९ | ४१ | २०७ |
| २०१ | पृथिव्यब्वनस्पतयः स्थावराः ... | २ | १३ | ४२ |
| २०२ | प्रकृतिस्थित्यनुभाव० ... ... | ८ | ४ | १६७ |
| २०३ | प्रत्यक्षमन्यत् ... ... | १ | १२ | १५ |
| २०४ | प्रदेशतो ऽसङ्ख्येयगुणं ... ... | २ | ३९ | ५० |
| २०५ | प्रदेशसंहार० ... ... | ५ | १६ | १२४ |
| २०६ | प्रमत्तयोगात्प्राणव्यपरोपणं हिंसा | ७ | ८ | १५४ |
| २०७ | प्रमाणनयैरधिगमः ... ... | १ | ६ | ९ |
| २०८ | प्राग्ग्रैवेयकेभ्यः कल्पाः ... ... | ४ | २४ | १११ |
| २०९ | प्राग्मानुषोत्तरान्मनुष्याः ... | ३ | १४ | ८६ |
| २१० | प्रायश्चित्तविनय० ... ... | ९ | २० | २०० |

## ब।

| | | | | |
|---|---|---|---|---|
| २११ | बन्धवधच्छविच्छेदा० ... ... | ७ | २० | १६० |
| २१२ | बन्धहेत्वभावनिर्जराभ्याम् ... | १० | २ | २१४ |
| २१३ | बन्धे समाधिकौ० ... ... | ५ | ३६ | १३६ |
| २१४ | बहिरवस्थिताः ... ... | ४ | १६ | १०५ |
| २१५ | बहुबहुविध० ... ... | १ | १६ | १७ |
| २१६ | बह्वारम्भपरिग्रहत्वं० ... ... | ६ | १६ | १४५ |
| २१७ | बादरसंपराये सर्वे ... ... | ९ | १२ | १९७ |

## श।

| अनुक्रमनम्बर। | | अध्याय। | सूत्रसङ्ख्या। | पत्रसङ्ख्या। |
|---|---|---|---|---|
| २८३ | शुभः पुण्यस्य ... ... | ६ | ३ | १६९ |
| २८४ | शेषाः स्पर्शरूप० ... ... | ४ | ९ | ९५ |
| २८५ | शेषाणां संमूर्छनम् ... ... | २ | ३६ | ५० |
| २८६ | शेषाणां पादोने ... ... | ४ | ३१ | ११४ |
| २८७ | शेषाणामन्तमुहूर्तम् ... ... | ८ | २१ | १७९ |
| २८८ | श्रुतं मतिपूर्वं ... ... | १ | २० | १९ |
| २८९ | श्रुतमनिन्द्रियस्य ... ... | २ | २२ | ४५ |

## स।

| | | | | |
|---|---|---|---|---|
| २९० | स आस्रवः ... ... ... | ६ | २ | १३९ |
| २९१ | स कषायत्वाज्जीवः० ... ... | ८ | २ | १६७ |
| २९२ | स कषाया० ... ... | ६ | ५ | १४० |
| २९३ | संक्लिष्टासुरो० ... ... | ३ | ५ | ७३ |
| २९४ | स गुप्तिसमिति ... ... | ९ | २ | १८३ |
| २९५ | संघातभेदेभ्य उत्पद्यन्ते ... | ५ | २६ | १२९ |
| २९६ | सङ्ख्येयासङ्ख्येयाश्च० ... ... | ५ | १० | १२२ |
| २९७ | सचित्तनिक्षेपपिधान० ... | ७ | ३१ | १६३ |
| २९८ | सचित्तशीतसंवृत्ताः ... ... | २ | ३३ | ४८ |
| २९९ | सचित्तसंबद्ध० ... ... | ७ | ३० | १६३ |
| ३०० | सत्सङ्ख्या० ... ... ... | १ | ८ | १२ |
| ३०१ | सदसतोरविशेषाद्य० ... ... | १ | ३३ | ३१ |
| ३०२ | सदसद्वेद्य ... ... ... | ८ | ९ | १६८ |
| ३०३ | स द्विविधो... ... ... | २ | ९ | ४१ |
| ३०४ | सद्वेद्य० ... ... ... | ८ | २६ | १८२ |
| ३०५ | सप्ततिर्मोहनीयस्य ... ... | ८ | १६ | १७९ |
| ३०६ | स बन्धः ... ... ... | ८ | ३ | १६७ |

| अनुक्रमसङ्ख्या। | | अध्याय। | सूत्रसङ्ख्या। | पत्रसङ्ख्या। |
|---|---|---|---|---|
| ३०७ | संमूर्छनगर्भोपपाता जन्म ... | २ | ३२ | ४८ |
| ३०८ | समनस्कामनस्काः ... ... | २ | ११ | ४२ |
| ३०९ | सम्यक्त्वचारित्रे ... ... | २ | ३ | ३९ |
| ३१० | सम्यग्दर्शन० ... ... | १ | १ | ५ |
| ३११ | सम्यग्दृष्टिश्रावक० ... ... | ९ | ४७ | २०८ |
| ३१२ | सम्यग्योगनिग्रहो गुप्तिः ... | ९ | ४ | १८३ |
| ३१३ | सप्त सनत्कुमारे ... ... | ४ | ३६ | ११४ |
| ३१४ | स यथा नाम ... ... | ८ | २३ | १८० |
| ३१५ | संयम श्रुत० ... ... | ९ | ४९ | २१० |
| ३१६ | सरागसंयम० ... ... | ६ | २० | १४६ |
| ३१७ | सर्वद्रव्यपर्यायेषु ... ... | १ | ३० | २६ |
| ३१८ | सर्वस्य ... ... ... | २ | ४३ | ५१ |
| ३१९ | संसारिणो मुक्ताश्च ... ... | २ | १० | ४२ |
| ३२० | संसारिणस्त्रसस्थावराः ... | २ | १२ | ४२ |
| ३२१ | संज्ञिनः समनस्काः ... ... | २ | २५ | ४६ |
| ३२२ | सागरोपमे ... ... ... | ४ | ३४ | ११४ |
| ३२३ | सागरोपमे ... ... ... | ४ | ४० | ११६ |
| ३२४ | सारस्वता० ... ... ... | ४ | २६ | ११२ |
| ३२५ | सामायिक ... ... ... | ९ | १८ | १९८ |
| ३२६ | सुखदुःख० ... ... ... | ५ | २० | १२५ |
| ३२७ | सूक्ष्मसंपराय० ... ... | ९ | १० | १९६ |
| ३२८ | सो ऽनन्तसमयः ... ... | ५ | ३९ | १३६ |
| ३२९ | सौधर्मादिषु यथाक्रमम् ... | ४ | ३३ | ११४ |
| ३३० | सौधर्मैशान० ... ... | ४ | २० | १०६ |
| ३३१ | स्तेनप्रयोग० ... ... | ७ | २२ | १६० |

## ह।



## ज्ञ।

## Appendix B.

# अथ पूजाप्रकरणम् ।

स्नानं पूर्वामुखीभूय प्रतीच्यां दन्तधावनम् ।
उदीच्यां श्वेतवस्त्राणि पूजा पूर्वोत्तरामुखी ॥ १ ॥
गृहे प्रविशतां* वामभागे शल्यविवर्जिते ।
देवतावसरं कुर्यात्सार्धहस्तोर्ध्वभूमिके ॥ २ ॥
नीचैर्भूमिस्थितं कुर्याद्देवतावसरं यदि ।
नीचैर्नीचैस्ततो वंश†सन्तत्यापि सदा‡ भवेत् ॥ ३ ॥
यथार्चकः स्यात्पूर्वस्या उत्तरस्याश्च संमुखः ।
दक्षिणस्या दिशो वर्जं विदिक्वर्जनमेव च ॥ ४ ॥
पश्चिमाभिमुखः कुर्यात्पूजां जैनेन्द्रमूर्तये ।
चतुर्थसन्ततिच्छेदो§ दक्षिणस्यामसन्ततिः ॥ ५ ॥
आग्नेय्यां तु यदा पूजा धनहानिर्दिने दिने ।
वायव्यां सन्ततिर्नैव नैर्ऋत्यां च कुलक्षयः ॥ ६ ॥
ऐशान्यां कुर्वतां पूजां संस्थितिर्नैव जायते ।
अंह्रिजानुकरांसेषु मूर्ध्नि पूजा यथाक्रमम् ॥ ७ ॥
श्रीचन्दनं विना नैव पूजां कुर्यात्कदाचन ।
भाले कण्ठे हृदम्भोजोदरे तिलककारणम् ॥ ८ ॥
नवभिस्तिलकैः पूजा करणीया निरन्तरम् ।
प्रभाते प्रथमं वासपूजा कार्या विचक्षणैः ॥ ९ ॥
मध्याह्ने कुसुमैः पूजा संध्यायां धूपदीपयुक् ।
वामाङ्के धूपदाहः स्यादग्रपूजा तु संमुखी ॥ १० ॥
अर्हतो दक्षिणे भागे दीपस्य विनिवेशनम् ।
ध्यानं च दक्षिणे भागे चैत्यानां वन्दनं तथा ॥ ११ ॥

* P सुस्थानके स्थितं । † वंशः ।

‡ A समं । § तदा स्यात्सन्ततिच्छेदः ।

हस्तात्प्रस्खलितं क्षितौ निपतितं लग्नं क्वचित्पादयो-
र्यन्मूर्धोर्ध्वगतं धृतं कुवसनैर्नाभेरधो यद्धृतम् ।
स्पृष्टं दुष्टजनैर्घनैरभिहतं यद्दूषितं कीटकै-
स्त्याज्यं तत्कुसुमं दलं फलमथो भक्तैर्जिनप्रीतये ॥ १२ ॥
नैकपुष्पं द्विधा कुर्यान्न छिन्द्यात्कलिकामपि ।
चम्पकोत्पलभेदेन भवेद्दोषो विशेषतः ॥ १३ ॥
गन्धधूपाक्षतैः स्रग्भिः प्रदीपैर्बलिवारिभिः ।
प्रधानैश्च फलैः पूजा विधेया श्रीजिनेशितुः ॥ १४ ॥
शान्तौ श्वेतं जये श्यामं भद्रे रक्तं भये हरित् ।
पीतं ध्यानादिकलाभे पञ्चवर्णं तु सिद्धये ॥ १५ ॥
( शान्तौ श्वेतं तथा पीतं लाभे श्यामं पराजये ।
मङ्गलार्थं तथा रक्तं पञ्चवर्णं तु सिद्धये ॥ )
खण्डिते सन्धिते छिन्ने रक्ते रौद्रे च वाससि ।
दानपूजातपोहोमसन्ध्यादि निष्फलं भवेत् ॥ १६ ॥
पद्मासनसमासीनो नासाग्रन्यस्तलोचनः ।
मौनी वस्त्रावृतास्योऽयं पूजां कुर्याज्जिनेशितुः ॥ १७ ॥
स्नात्र* विलेपनविभूषणपुष्पवास-
धूपप्रदीपफलतन्दुलपत्रपूगैः ।
नैवेद्यवारिवसनैश्चमरातपत्र-
वादित्रगीतनटनस्तुतिकोशवृद्ध्या† ॥ १८ ॥
इत्येकविंशतिविधा जिनराजपूजा
ख्याता सुरासुरगणेन कृता सदैव ।
खण्डीकृता कुमतिभिः कलिकालयोगा-
द्यद्यत्प्रियं तदिह भाववशेन योज्यम् ॥ १९ ॥[१]

इति प्रसिद्धा श्रीउमास्वातिवाचकविरचितं पूजाप्रकरणं समाप्तम् ॥

---

* स्नानं ।  † P ०कोशवृद्धिः

१. Peterson's third Report App. I. P. 328. Folios 3.
पूजाविधिप्रकरणं सभाषम् मू० उमास्वातिवाचकः ।

## Appendix C.

# अथ *जम्बूद्वीपसमासः ।

सर्वजननयनकान्तं नखलेखाविसृतदीधितिवितानम् ।
पादयुगचन्द्रमण्डलमभिरचतु नः सदा जैनम् ॥

**जम्बूद्वीपः** सर्वमध्ये वृत्तो लक्षमानो दैर्घ्यविस्ताराभ्यां योजनत्रिलक्षषोड़शसहस्रसप्तविंशद्विशतत्रिगव्यूताष्टाविंशधनुःशतत्रयोदशाङ्गुलार्धाङ्गुलसशेषपरिधिः स्वनामदेवताचतुरष्टचतुर्विस्तारोच्छ्रायप्रवेशविजयादिचतुर्द्वारः वज्रमयजगतीवृतः । साष्टोच्छ्रायचतुर्द्वादशोपर्यधोविसृता* । तत्रार्धयोजनो रत्नमयो जालकटको जगत्यष्टभागविस्तृतः । तदुपरि पद्मवरवेदिका कटकमाना विचित्ररत्नमयस्तम्भफलकसंघाटकशूचीवंशवंशकवेल्लुकनिर्माणा गवाक्षहेमकिंकिणीघण्टारजतमणिमुक्तापद्मतालकरचना वायुसंपातसंघट्टशब्दवती नानालतासंघाटकान्तरस्तम्भान्तराद्युत्पलादिरचना उभयतो वेदिकावनखण्डवती । तानि वनानि रूपरसगन्धस्पर्शशब्दसुखोपेतमणितृणानि रत्नमयत्रिसोपानस्थगनतोरणाष्टमङ्गलध्वजपर्वतकान्दोलकगृहकमण्डपकासनवेदिका†विचित्रजलवापीभूषितानि । तद्दक्षिणभागे **भरत**माहिमवतः षड्विंशपञ्चयोजनशतसषट्कलविसृतं विजयाढ्यगङ्गासिन्धुषोढाविभक्तं मागधवरदामप्रभासतीर्थद्वारं तत्स्थतन्नामदेवं तद्दक्षिणभागमध्यायोध्यम् । तन्मध्ये पूर्वापरतः पञ्चविंशतियोजनोच्छ्रायस्तत्पादावगाढः पञ्चाशद्विस्तृतो रुचकसंस्थितः सर्वरा-

---

* टी. संघाटकैः नरशरीरयुग्मैः शूचीभिः प्रतिबन्धैः । † टी॰ adds वन ।

जतो **विजयार्द्धः** स्वविस्ताररहितभारतमानार्धदक्षिणोत्तरविभागौ उभयतो वेदिकावनखण्डवान्। तदपरभागे तमिस्रागुहा गिरिविस्तारायामा द्वादशाष्टविस्तारोच्छ्राया विजयद्वारप्रमाणद्वारा वज्रकपाटपिहिता कृतमालकदेववसतिर्वक्रमध्यद्वियोजनान्तरत्रियोजनविस्तारोन्मग्ननिमग्नजलाख्यसरिद्वती। तद्वत्पूर्वतः खण्डप्रपातागुहा नृत्तमालकवसतिः। तत्र दशयोजनान्यारुह्योभयतो विद्याधरश्रेण्यौ दशकविस्तृते पर्वतायामे सवेदिकावनखण्डे। तत्र दक्षिणा सजनपदरथनूपुरचक्रवालप्रमुखपञ्चाशन्नगरवती विचित्रमणिपुष्करिण्युद्यानक्रीडास्थानविभूषिता। तथोत्तरा गगनवल्लभपुरस्सरषष्टिनगरा। तत्र विद्याप्रसादोपहिताभीष्टभोगभुजो विद्याधराः। ततो दशसु तद्वदाभियोग्यश्रेण्यौ समातिरम्यभूमौ इन्द्रलोकपालाभियोग्यभवनालंकृते तदाश्रये। ततः पञ्चसु शिखरतलं दशकविस्तृतं वेदिकावनवदतिरुचिरं देवक्रीडास्थानम्। तत्र नवकूटानि सिद्धायतन- दक्षिणार्धभरत- खण्डप्रपात- माणिभद्र- विजयार्द्ध- पूर्णभद्र- तमिस्रा-गुहोत्तरार्धभरत-वैश्रवणा*ख्यानि प्राक्क्रमाद्गव्यानि गिरिपादोच्छ्रायाणि तावन्मूलविस्ताराणि उपरि तदर्धं सर्वरत्नमयानि मध्ये त्रीणि कनकमयानि। तत्र च प्रथमे सिद्धायतनं क्रोशार्धक्रोशदैर्घ्यविस्तारं किंचिन्न्यूनतदुच्छ्रयं रत्नचित्रालोकं पञ्चधनुःशततदर्धार्धोच्छ्रायविस्तारप्रवेशत्रिद्वारं न पश्चात्। उभयतः पद्मस्थपूर्णकलश-नागदन्तक-शालभञ्जिका-जालकटक-घण्टा-वनमालाक्रमरचनानि। तन्मध्ये मणिपीठिका पञ्चधनुःशतायामविष्कम्भा तदर्ध-

* वैश्रमण।

पृथुः । तदुपरि देवच्छन्दकः पञ्चधनुःशत उभयतस्तदधिकोच्छ्रायः । तत्र प्रतिमाष्टशतं जिनमानम् । तदपरं दक्षिणार्धभरतकूटं तद्वत् । तदुपरि प्रासादः पूर्वमानः । तन्मध्ये मणिपीठिकायां सिंहासनमधिपपरिवारसिंहासनवृतम् । तदधिपो भरतः पल्योपमस्थितिर्देवः । तद्दक्षिणतोऽन्यजम्बूद्वीपे भरतराजधानी भरतनिवासः । तथा शेषेषु पञ्चसु स्वनामानो देवाः । द्वयोर्नृत्तमालकृतमालकौ ॥

**वृषभकूटो** हिमवन्मध्यभागदक्षिणनितम्बे रत्नमयो ऽष्टावुच्छ्रितः चतुर्द्वादशोपर्यधोविस्तृत ऋषभदेववासः ।

( इति भरतक्षेत्रसंक्षेपः )

भरतोत्तरतो **हिमवान्** पूर्वापरतो लवणाववद्धो भरतद्विगुणविस्तारः शतोच्छ्रायो हेममयो मणिविचित्रः । तदुपरि बहुमध्ये **पद्महृदः** प्रागपरायितसहस्रं पञ्चशतविस्तृतः चतुःकर्णो* दशयोजनावगाढो रजतकूलो वज्रमयपाषाणः तपनीयतलः सुवर्णमध्यरजतमणिपालिकः चतुर्दिश्यमणिसोपानः स्ववतारोत्तारः तोरणध्वजच्छत्रादिभूषितो नीलोत्पल-पौण्डरीक-शतपत्र-सौगन्धिकादिपुष्पचितो विचित्रशकुनिमत्स्यविचरितः षट्पदोपभोग्यः । तन्मध्ये योजनमानं पद्ममर्धयोजनपृथु दशावगाढं जलाद्द्विक्रोशोच्छ्रयं वज्रारिष्टवैडूर्यमूलकण्डनालं वैडूर्यजाम्बूनदबाह्यान्तःपत्रं कनककर्णिकं तपनीयकेसरं नानामणिमयपुष्करम् । कर्णिकार्धयोजना तदर्धपृथुः । तदुपरि भवनं विजयार्धवत् । मणिपीठिकायां श्रीदेव्याः शय्या । तदन्येन तल्लक्षणेनाष्टशतेन तदर्धमानेन वृतम् । तथा त्र्येकैकैकचतु-

* डो. चतुरस्रः ।

र्दिचु क्रमशस्त्रतुरष्टदशद्वादशषोडशसहस्रेषु द्वितीयषष्ठयोः स्थानयो-स्त्रतुःसप्तसु पद्मेषु तत्सामानिकमहत्तरिकातदभ्यन्तरमध्यबाह्यपर्षद-नीकाधिपात्मरक्षादिस्थानानि पश्चिमोत्तरक्रमाद्गण्यानि । तद्द्वात्रिं-शच्चत्वारिंशदष्टचत्वारिंशल्लचसंख्याभिस्तिसृभिः पंक्तिभिर्वृतम् ॥

तत्पौरस्त्यतोरणप्रवहा गङ्गा प्राग्गिरिणा* पञ्चशतगा गङ्गावर्त-नकूटेनावर्तिता दक्षिणेन सपोषत्रयोविंशतिसहितानि पञ्चशतानि गता षट्क्रोशविस्तृता प्रवहे ऽर्धत्रिषष्टिर्मुखे मुखप्रमाणवेदिका सर्वत्र । तत्प्रपाते वज्रमयी जिह्विकार्धयोजनायामा षडधिकविस्तृ-तार्धक्रोशपृथुला विवृतमकरमुखाकृतिः ॥

वज्रतलं तदधो गङ्गाप्रपातकुण्डं षष्टियोजनमायामविष्कम्भाभ्यां अधःपञ्चाशद्दशावगाढं त्रिसोपानतोरणादिमत् । तन्मध्ये गङ्गाद्वीपो ऽष्टकायामविष्कम्भः । तन्मध्ये भवनं तद्वत्पीठिकायां शय्या गङ्गायाः । तद्दक्षिणतोरणगा खण्डकप्रपातगुहाविजयार्धविदारिका दक्षिणार्ध-बङ्कमध्यप्राक्प्रवृत्ता अर्धार्धसमुत्यचतुर्दशसहस्रसरिद्वृता प्रवाहे अधो ऽर्धक्रोशा सपादयोजना मुखे जगतीदारणसमुद्रानुप्रवेशा ॥

तथापरेण† सिन्धुः स्वकुण्डद्वीपतमिस्रागुहाविशिष्टा । षट्स-प्ततिद्विशतषट्कलोत्तरगा तथा रोहितांशा गङ्गाद्विगुणसर्वमाना स्वनामदेवीकुण्डद्वीपा शब्दापात्यार्धयोजनाप्राप्तापरगा हैमवतपा-श्चात्याब्धिगामिनी । हिमवति सिद्धायतनक्षुल्लहिमवद्भरतेलागङ्गा-श्रीरोहितांशासिन्धुसुराहैमवतवैश्रमणकूटान्येकादश सर्वरत्नमयानि स्वनामदेवतास्थानानि पञ्चशतोच्छ्रायाणि तावदधोविस्तृतान्युपरि

* D. पर्वाभिमुखी ।    † Ms. omits तथा.

तदर्धम् । प्रथमे जिनगृहं पञ्चाशत्तदर्धायामविष्कम्भं षट्त्रिंशदुच्च मष्टायामचतुर्विष्कम्भप्रवेशत्रिद्वारम् ; मध्ये ऽष्टयोजनानि विस्तारायामाभ्यां मणिपीठिका चतुःपृथ्वी । तन्मानो देवच्छंदकः साधिकायामोच्छ्रयः। प्रतिमादि तद्वत्। शेषेषु प्रासादाः सार्धद्विषष्टियोजनोच्चास्तदर्धविस्तृताः सिंहासनवन्तः सिद्धायतनवत् ॥

( इति हिमवत्संग्रहः )

हिमवदुत्तरं **हैमवतं** तद्विगुणविष्कम्भं ( हिमवतो गिरेरुदीचीनं ) । तत्र मिथुनानि गव्यूतोच्चानि पल्यस्थितीनि चतुर्थभक्तभोजीन्येकोनाशीतिदिनस्वापत्यपालकानि चतुःषष्टिपृष्ठानि । तन्मध्ये वृत्तो विविधरत्नमयः सर्वतः साहस्रः शब्दापाती गिरिः । तदुपरि स्वातेर्भवनं हिमवतः कूटवत् ॥ ( इति हैमवतसमाहारः )

तदुत्तरो ऽर्जुनमयो **महाहिमवान्** हैमवतद्विगुणविस्तारो द्विशतोच्चः । तत्र महापद्मो ह्रदो द्विसहस्रायामस्तदर्धविष्कम्भस्तद्वत्पद्मन्यासवान् ह्रीदेवीवासः* । तद्दक्षिणप्रवाहा रोहित्स्वनामदेवीकुण्डरोहितांशासमाना पूर्वोदधिगा ह्रदविस्तारापनीतपर्वतार्धदक्षिणगा अष्टाविंशतिसहस्रनदीवृता । उत्तरा हरिकान्ता पञ्चविंशतियोजनप्रवहा तन्मानजिह्विका चत्वारिंशदधिकद्विशतकुण्डा द्वीपो द्वात्रिंशत् गन्धापातियोजनाप्राप्तापरनिवृत्ता षट्पञ्चाशन्नदीसहस्रानुगापरोदधिगा । तत्र सिद्धमहाहिमवद्धैमवतरोहिताह्रीहरिकान्ताहरिवैडूर्यकूटान्यष्टौ हिमवत्तुल्यानि स्वनामदेवतानि ॥

(इति महाहिमवत्समासः)

---

* Var. V. takes तद्वत्पद्म to देव्यावासः to be a separate Sūtra.

तदुत्तरं हरिवर्षं महाहिमवद्द्विगुणं पूर्वद्विगुणमानचतुःषष्टि-दिनपालनमिथुनम् । तन्मध्ये गन्धापाती वृत्तो ऽरुणाधिवासः शब्दापातिवत् ॥

( इति हरिवर्षक्षेत्रसंक्षेपः )

तदुत्तरस्तपनीयमयो **निषधो** हरिवर्षद्विगुणविस्तारश्चतुःशतो-च्चः । तन्मध्ये तिगिञ्छिह्रदश्चतुर्दिसहस्रायामविष्कम्भः तद्वद्धृति-देवीसल्कः । तद्दक्षिणगा स्वनामद्वीपा हरिकान्तावत् हरित्पूर्वसमु-द्रपातिनी । उत्तरेण सीतोदा पश्चाशत्प्रवहा तन्मानजिह्विका हरिद्द्विगुणकुण्डद्वीपमाना निषधदेवकुरुसूर्यसुलसविद्युत्प्रभह्रद-मध्यविभागा चतुरशीतिनदीसहस्रानुगतभद्रशाला द्वियोजनाप्राप्त-मन्दरापरनिवृत्ता विद्युत्प्रभदारिका अपरविदेहद्विधाकर्त्री एकैक-विजयादष्टाविंशतिसरित्सहस्रानुगा जयन्तद्वाराधोजगतीभेदा अप-रोदधिगा। तत्र नवकूटानि हिमवट्टष्टव्यानि (हिमवद्वत्!) सिद्धनि-षधहरिवर्षप्राग्विदेहहरिधृतिसीतोदापरविदेहरुचकाख्यानि स्वनाम-देवतानि ॥

( इति निषधोद्धारः )

तदुत्तरो वैडूर्यमयः कीर्त्याश्रयकेसरिह्रदो **नीलः** सिद्ध-नील-प्राग्विदेह-सीता-कीर्ति-नार्यपरविदेह-रम्यकोपदर्शनकूटो निष-धमानः । तत्र दक्षिणगामिनी सीता नीलोत्तरकुरुचन्द्रैरावतह्रद-माल्यवद्ह्रदगिरिभेदिनी प्राग्विदेहच्छेदिनी विजयद्वाराधोगतिः सीतोदावत् । तथा नारी हरिद्वदुत्तरापरोदधिगा ॥

( इति नीलगिरिसमासः )

तदुत्तरं **रम्यकं** हरिवर्षवत्। तत्र च माल्यवान् विजयार्धः पद्मदेवाधिवासः॥

( इति रम्यकम् )

तदग्राजतो बुद्ध्याश्रयमहापुण्डरीकहृदो **रुक्मी** सिद्धरुक्मि रम्यकनरकान्तबुद्धिरौप्यहैरण्यवतमणिकाञ्चनकूटो महाहिमवद्वत्। तत्र दक्षिणा नरकान्ता पूर्वगा हरिकान्तावत्। रूप्यकूलोत्तरापरगा रोहिद्वत्॥

( इति रुक्मी )

तदुत्तरं **हैरण्यवतं** हैमवतवत्। तत्र च विकटापाती प्रभासाधिवासो विजयार्धस्तद्वत्॥

( इति हैरण्यवतम् )

तदनन्तरस्तपनीयमयो लक्ष्मीमत्पौण्डरीकहृदवान् **शिखरी** सिद्ध- शिख- रहैरण्यवत- सुरादेवी- रक्ता- लक्ष्मी- सुवर्ण- रक्तोदा- गन्धा-पात्यैरावततिगिञ्छिकूटो हिमवद्वत्। ततः सुवर्णकूला दक्षिणा पूर्वगामिनी रोहितांशावत् तथा रक्तारक्तोदे उत्तरे गङ्गासिन्धुवत्॥

( इति शिखरी )

सर्वोत्तरमैरावतं भरतवत्। तन्मध्ये* विजयार्धो विपर्ययनगरसङ्ख्यस्तद्वदैशानलोकपालाभियोग्याधिवासः॥

( इति ऐरावतम् )

( इति प्रथममाह्निकम् )

---

* Var V तदुपरि च।

## अथ द्वितीयमाह्निकम् ।

निषधनीलमध्ये महाविदेहं निषधद्विगुणविष्कम्भं मध्यलक्षायामम् ॥

तन्मध्ये ऽधः सहस्रावगाढो नवनवत्युच्छ्रयो दशाधोविस्तृत उपर्येकसाहस्रस्त्रिकाण्डस्त्रिलोकप्रविभक्तमूर्त्तिः सर्वरत्नमयो **मेरुः** पृथिव्युपलवज्रशर्कराप्रथमकाण्डो ऽङ्कस्फुटिकरजतरूपमध्य उपरि जाम्बूनदः । प्रथमं साहस्रं त्रिषष्टिषट्त्रिंशत्साहस्रे इतरे । तत्र भद्रशालनन्दनसौमनसपण्डकानि वनानि । धरण्यां **भद्रशालं** चतुर्वक्षारपर्वतविभक्तं द्वाविंशतिसहस्रं मेरोः पूर्वेण तथापरेणोत्तरेणार्धतृतीयशतं तथा दक्षिणेन । पञ्चाशत्सु योजनेषु चतुर्दिश्यानि सिद्धायतनानि हिमवद्वत् । तथा तावति पुष्करिण्यो विदिक्षु चतस्रः चतस्रः पञ्चविंशतिविष्कम्भास्तद्विगुणायामा दशावगाढाः पद्मा-पद्मप्रभा-कुमुदा-कुमुदप्रभोत्पलगुल्मा-नलिन्युत्पलोत्पलोज्ज्वला-भृङ्गा-भृङ्गनिभाञ्जना-कज्जलप्रभा-श्रीकान्ता-श्रीमहिता-श्रीचन्द्रा-श्रीनिलयाः प्रागुत्तरक्रमाद्गण्याः । तन्मध्ये प्रासादाः पञ्चशतोच्चास्तदर्धविस्तृताः सिंहासनवन्तो दक्षिणौ शक्रस्य उत्तरावीशानस्य । सीतासीतोदोभयकूलेषु द्वौ द्वौ पद्मोत्तरनीलसुहस्त्यञ्जनकुमुदपलाशवडंश*रोचनकूटगिरयः सीतोत्तरक्रमाद्धिमवत्कूटवत्स्वनामदेवाः ॥ तदुपरि पञ्चशत्यां **नन्दनं** वृत्तं पञ्चशतविस्तृतं तद्वदायतनप्रासादवत् । पुष्करिण्यः नन्दोत्तरा नन्दा सुनन्दा नन्दिवर्धना नन्दिषेणा अमोघा गोस्तूपा सुदर्शना भद्रा

---

* V वतंसो वा ।

विशाला कुमुदा पुण्डरीकिणी विजया विजयन्ती जयन्ता अपराजिता। नन्दनमन्दरनिषधहैमवतरजतरुचकसागरचित्तवज्र-कूटानि दिक्कुमारीस्थानानि। ताश्च नामतो मेघंकरा मेघवती सुमेघा मेघमालिनी सुवत्सा वत्समित्रा च वारिषेणा बलाहका। तथा नवमं बलकूटं प्रागुत्तरं साहस्रं तद्वद्विस्तृतं तदर्धमुपरि बलावसतिः। स्वदिक्षु राजधान्यस्तासाम्॥ अर्धत्रिषष्टिसहस्रेषु **सौमनसं** नन्दनवनवत्। कूटवर्ज्याः पुष्करिण्यः सुमनाः सौमनसा सौमनांशा मनोरमा उत्तरकुरुः देवकुरुः वीरसेना सरस्वती विशाला माघभद्रा भयसेना रोहिणी भद्रोत्तरा भद्रा सुभद्रा भद्रावती॥ ततः षट्त्रिंशत्सु **पाण्डकं** चतु-र्णवचतुःशतं। तन्मध्ये चूलिका चत्वारिंशद्योजनोच्चा चतुर्द्वादशोप-र्यधोविस्तृता वैडूर्यमयी। तत्र जिनायतनं विजयार्धवत्। वनं तथा कूटवर्ज्यं पुष्करिण्यः पुण्ड्रा पुण्ड्राभा सुरक्ता रक्तवती चीररसा इक्षु-रसा अमृतरसा वारुणी शङ्खोत्तरा शङ्खा शङ्खावर्ता बलाहका पुष्पोत्तरा पुष्पवती सुपुष्पा पुष्पमालिनी। पाण्डके*चतस्रोऽभि-षेकशिला दिक्षु पाण्डतिपाण्डुरक्तातिरक्तकम्बलाख्यास्तुर्योजनो-त्सेधाः पञ्चशतायामास्तदर्धविस्तारा अर्धचन्द्राकारा अर्जुनकनकमय्य-स्तुर्दिक्त्रिसोपाना वेदिका वनखण्डतोरणध्वजच्छत्रादियुक्ताः। पूर्वापरयोर्द्वे द्वे सिंहासने पञ्चधनुःशतायामविष्कम्भे तदर्धपृथुनी। तयोर्दक्षिणोत्तरतीर्थकराभिषेकः॥ (इति मेरुः)

गजदन्ताकृतयो विदिक्षु मेरोः चत्वारो वक्षस्कारपर्वताः सौम-

* Var V पाण्डकवने वनान्ते वा (पाठः)।

नसविद्युत्प्रभगन्धमादनमाल्यवन्तः प्राग्दक्षिणक्रमात् रजततपनीयकनकवैडूर्यमयाः सप्तनवसप्तनवकूटाः बहिश्चतुःशतोच्चाः पञ्चशतविस्तृताः मात्रावृद्ध्या मेरुसमीपे पञ्चशतोच्चा विस्तारहान्याङ्गुलासङ्ख्येयभागविस्तारा अश्वस्कन्धाकृतयः त्रिंशत्सहस्रद्विशतनवोत्तरषट्कलायामाः सर्वे ऽत्र हिमवत्तुल्यसिद्धायतनकूटाः। तत्र प्रथमे सौमनसमङ्गलापातिदेवकुरुविमलकाञ्चनविशिष्टानि। विमलकाञ्चनयोस्तोयधाराविचित्रे देवते। द्वितीये विद्युत्प्रभ-देवकुरु-पद्म-कनकस्वस्तिक-सीतोदा सदाजल-हरिकूटानि। कनकस्वस्तिकयोः पुष्पमाला अनन्दिता। ततो गन्धमादनगन्धिलावदुत्तरकुरुस्फाटिकलोहितानन्दानि। स्फाटिकलोहितयोर्भोगंकरा भोगवती। ततो माल्यवदुत्तरकुरुकच्छसागररजतसीतापूर्णभद्रहरित्सहानि पञ्चमषष्ठयोर्भोगाभोगमालिन्यौ। हरिहरित्सहकूटे बलतुल्ये।

(इति वक्षस्काराः।)

मन्दरनीलयोरुत्तरदक्षिणा गन्धमादनमाल्यवतोर्मध्ये **उत्तराः कुरव** एकादशयोजनसहस्रद्विचत्वारिंशाष्टशतसद्विकलविस्तृताः समरम्यमणितृणविभूषितभुवो वापीपुष्करिणीपर्वतकगृहमण्डपकसुखस्पर्शदृश्यशिलापट्टकमण्डिता विविध*गुल्मपुष्पवनकृताश्चित्रवृक्षलताशोभिता नानाकृतिवनराजयः। तत्र वृक्षाः मदङ्गा मधुप्रसन्नावरासवादिफलरसस्यन्दिनो भृङ्गाः कर्करीस्थालमणिभाजनादियुक्ताः तूर्याङ्गा विस्रसापरिणामादिचिवादित्रशब्दवन्तः दीपशिखादीपविशेषज्वालिनः ज्योतिषः सर्वरत्नकल्पाः चित्राङ्गाः प्रेक्षामण्डपाकार-

* विविध।

विचित्रकल्पितमाल्यवन्तः चित्ररसाः स्वादुभोजनखाद्यकसंपन्ना मण्यङ्गा यथाभिप्रेतभूषणवन्तो गेहाकारा एकशालादिगृहविन्यासिनो अनगणा (अनाग्न्या) वस्त्रसंपद्वन्तः। स्त्रियो लक्षणवत्यः परमरूपाः शृङ्गारादि-कलावेदिन्यो जराव्याधिदौर्भाग्यशोकाद्यनिष्टरहितास्तथा पुरुषाः सुरभिनिश्वासा अस्वेदमलरजसः सच्छायादौप्रवज्रर्षभनाराचसंहननाः समचतुरस्रास्त्रिगव्यूतोच्चाः* किंचिदूनाः स्त्रियः षट्पञ्चाशद्द्विशतपृष्ठा भद्राः संतुष्टा यथाभिरुचितस्थाना मिथुनधर्माणस्त्रिपल्योपमायुषो अष्टमभक्तपृथिवीपुष्पफलाशनाः प्रधाना आबाधाविवाहादिरहिता एकोनपञ्चाशद्रात्रिंदिवापत्यपालकाः सुखयुग्ममृत्यवो देवगतयः।

सीतापूर्वापरगौ नीलाच्चतुस्त्रिंशाष्टशतसचतुःसप्तभागदक्षिणौ **यमकपर्वतौ** योजनसहस्रोच्चौ तावदधोविस्तृतौ तदर्धमुपरि कनकमयौ। तथा प्रासादौ यमकयोर्हिमवद्वत्। तावति दक्षिणेन नीलाद्या ह्रदा वज्रत्रिसोपानतोरणाः पद्मह्रदवत्स्वनामदेवताधिवा-साः। तेषां प्रागपरस्या दशदशकाञ्चनकनगाः शतोच्चास्तदर्धमूलो-परिविस्ताराः काञ्चनदेवताधिवासा दशयोजनाबाधस्थानाः॥

. उत्तरकुरुपूर्वार्धमध्ये जाम्बूनदमयं **जम्बूपीठं** पञ्चशतायामवि-स्तारं मध्ये द्वादश पृथु अन्ते क्रोशद्वयं चतुर्दिग्द्वारम्। तदुपरि वैडूर्यपर्णस्तपनीयवृन्तो जाम्बूनदः सुकुमारः रक्तपल्लवप्रवालाङ्कुरधरो विचित्रमणिरत्नसुरभिपुष्पो जम्बूवृक्षः तदमृतरससदृशफलं। प्राच्ये शाले भवनं इतरेषु प्रासादाः मध्ये सिद्धायतनं सर्वाणि विजया-र्धमानानि। तत्परिवारो ऽष्टशतं तदर्धमानं जम्बूनां प्रत्येकं षट्-

* त्रिगव्यूतोच्चास्त्रिक्रोशोच्चाः।

कटकमानवेदिकावृतम् । अनादृतदेववासः तत्परिवारदेवसङ्ख्यामानवृत्तबहिर्वृतः अौपद्मवद्बहिः शतयोजनमानचिवनखण्डवृतः । योजनपञ्चाशतमवगाह्य प्रथमवनखण्डे चतुर्दिश्यानि भवनानि । विदिक्षु चतुश्चतुःपुष्करिणीमध्ये प्रासादाः । पुष्करिण्यः क्रोशार्धक्रोशपञ्चधनुःशतायामविष्कम्भावगाहा नन्दावशिष्टाः । भवनप्रासादमध्येऽष्टौ कूटानि जाम्बूनदानि योजनाष्टकोच्चानि तावन्मूलविस्ताराणि तदर्धमुपरि । तत्रायतनानि जिनानाम् । शालेषु वनपूर्वोत्तरे प्रासादे सिंहासनानि ॥

( इति उत्तरकुरुसंक्षेपः )

मन्दरदक्षिणास्तथा **देवकुरवः**। निषधोत्तरौ चित्रविचित्रकूटौ यमकवत् । तथा ह्रदा निषधादयः। तदपरार्धे शाल्मलीवृक्षो गरुडावासो जम्बूवत्पीठकूटानि राजतानीति विशेषः ॥

( इति देवकुरुसंक्षेपः )

विदेहयो**र्द्वात्रिंशद्विजयाः**। उत्तरा विजयाढ्या गङ्गासिन्धुविभक्ताः दक्षिणा रक्तारक्तोदाभ्यां भरतवत् । षोडशयोजनसहस्रद्विनवतपञ्चशतद्विकलायामा द्वियोजनसहस्रत्रयोदशद्विशतकिंचिदूनविस्तारा निजविस्तारायामद्वितीयाष्टमस्वविजयदक्षिणोत्तरार्धाख्यकूटपञ्चपञ्चाशन्नगरविजयार्धाः । उदग्विजयार्धाभियोग्यश्रेण्यौ शक्रस्य लोकपालानाम् । निषधनीलनितम्बर्षभकूटाः तन्नितम्बकुण्डनदीप्रवहाः । विजयनामचक्रवर्तिनः सीतासीतोदातीर्थाः। कच्छसुकच्छमहाकच्छकच्छवदावर्तलाङ्गलावर्त्तपुष्करपुष्करवन्तः प्राग्विदेहोत्तराः वत्ससुवत्समहावत्सवत्सवद्रम्यरम्यकरमणीयमङ्गलवन्तः पद्म-

सुपद्म-महापद्म-पद्मवच्छङ्ख-कुमुद-नलिन-सलिलवन्तो दक्षिणाः वप्र-सुवप्र-महावप्र-वप्रवद्वल्गु-सुवल्गु-गन्धिलगन्धिलवन्तः माल्यवच्छैलासन्नप्रदेशात् प्रभृति प्रादक्षिण्येनानुक्रमेण । गिरिनदीविभक्ताः । चत्वारो गिरयः तिस्रो नद्यः । अर्धे ऽर्धे गिरयो वक्षस्काराक्रतय-स्तद्वद्विस्तारोच्छ्राया मूलविस्तारसर्वसमा ऋजवः सर्वरत्नमयाः सिद्ध-स्वनामपूर्वापरानन्तरविजयाख्यचतुःकूटाः नद्यासन्नसिद्धकूटाश्चित्रप-द्मनलिनैकशैलाः त्रिकूटवैश्रवणसुदर्शनाञ्जना अङ्कपद्मवदाशीविषसुखा-वहाः चन्द्रसूर्यनागदेवगिरयः । राजधान्यो द्वादशनवयोजना-यामविस्ताराः क्षेमा-क्षेमपुरारिष्टा-रिष्टपुरा खड्गा-मञ्जूषौषधी-पौण्डरीकिण्यः सुसीमा-कुण्डलापराजिता-प्रभाकराङ्कवती-पद्मा-वती-शुभा-रत्नसंचयाः अश्वसिंहमहाविजयपुरा-राज्या-विराज्या अशोका-वीतशोका-विजया-विजयन्ता-जयन्तापराजिता-चक्रखड्ग-पुरा-वध्यायोध्या । नद्यो विजयच्छेदिन्यो रोहितावत्कुण्डद्वीपाः स्वनामदेवीवासाष्टाविंशतिनदीसहस्रानुगाः प्रत्येकं सर्वसमाः पञ्चविं-शशतविस्तृताः अर्धतृतीययोजनावगाहा ग्राहहृदपङ्कवत्यस्तप्तमत्तो-न्मत्तजलाः क्षीरोदासिंहस्रोतान्तर्वाहिण्य ऊर्मिफेनगभीरमालिन्यः । प्राक्पश्चात्सीतासीतोदामुखवने देवोद्याने दक्षिणोत्तरे विभागे गिरिसमीपे कलाविस्तृते इतरपार्श्वद्वियोजनसहस्रद्वाविंशनवशते ॥

जघन्येन चत्वारस्तीर्थकृतो जम्बूद्वीपे तथा चक्रवर्तिबलदेव-वासुदेवा उत्कर्षेण चतुस्त्रिंशज्जिनचक्रीशाः ॥

(इति विजयाः) ।

इति द्वितीयमाह्निकम् ॥

## अथ तृतीयमाह्निकम् ।

जम्बूद्वीपद्विगुणद्विगुणमाना द्वीपसमुद्राः पूर्वपूर्वपरिक्षेपिणो वलयाकृतयः सर्वशुभवर्णादिनामानो ऽर्धतृतीयोद्धारसागरोपमसमयसङ्ख्या वेदिकावद्देवक्रीडोपभोग्यविचित्ररम्यभूमिभागा मानुषोत्तरबाह्याः ॥

तत्र **लवणोदधिः** सहस्रावगाढो मात्रया सप्तशतोच्छ्रितगोतीर्थपथेन पञ्चनवतिसहस्रः षोडशसहस्रशिखः । सा दशविस्तृता अभ्यन्तरतो बाह्यतश्च । तदुपरि द्वौ कालौ न्यूनार्धयोजनं ह्रासवृद्धिः । तत्र मध्ये लक्षाश्चतुर्दिक्षु पाताला वडवामुखकेयूपयूपकेश्वराख्याः साहस्रा वज्रमयकुड्या दशसहस्राण्यधोमुखे च कालमहाकालवेलम्बप्रभञ्जनावासा वायुधृतत्रिभागजला महालंजराकृतयः । क्षुल्लकाश्चान्ये साहस्रा अधोमुखे च शत्याः दशकुड्याः वायून्नामितमध्यमिश्रोपरिजलाः सप्तसहस्रचतुरशीताष्टशतसर्वाग्रसङ्ख्याः । द्विचत्वारिंशद्विसप्ततिषष्टिसहस्रसङ्ख्याः तत्रान्तर्बाह्यवेलाशिखाधारिणो नागाः । गोस्तूपोदकाभासशङ्खोदकसीमानो वेलाधारीन्द्रगिरयः कनकाङ्करजतस्फटिकमया गोस्तूपशिवकशङ्खमनोह्रदवासा द्विचत्वारिंशत्सहस्रेषु दिक्ष्वा एकविंशसप्तदशशतोच्चा अधो द्वाविंशत्यधिकसहस्रविस्तारा उपरि चतुर्विंशचतुःशताः । तदुपरि प्रासादा हिमवद्वत् । कर्कोटककार्दमकैलासारुणप्रभानुवेलाधारीन्द्रगिरयः सर्वरत्नमयाः । द्वादशसु सहस्रेषु प्राक्चन्द्रद्वीपौ तावद्विस्तारायामौ तावत्परेण सवित्रोस्तथा गौतमद्वीपः सुस्थितावासः तावति तथान्तर्बाह्यलावणकचन्द्रसूर्याणाम् ॥

तथा शेषद्वीपेषु पञ्चानाम् । स्वद्वीपेषु सर्वेषु प्रासादा हिमवद्वत् तद्राजधान्यश्च प्राकपश्चात् ॥

लवणत्र्यां: समा अचुभितोदका उदधय: ॥

हिमवतः प्राक्पश्चाद्विदिच्चु च्यादिषु नवान्तेषु योजनशतेषु उदधाववगाह्य तावद्विस्तारायामाः सप्तसप्तान्तरद्वीपाश्चतुश्चतुः प्रागुत्तरक्रमात् एकोरुकाभाषिकलाङ्गूलिकवैषाणिका हयकर्णगजकर्णगोकर्णशष्कुलीकर्णा आदर्शमुखमेषमुखहयमुखगजमुखा अश्वमुखहस्तिमुखसिंहमुखव्याघ्रमुखा अश्वकर्णसिंहकर्णहस्तिकर्णकर्णप्रावरणा उल्कामुखविद्युज्जिह्वमेघमुखविद्युद्दन्ताः घनदन्तगूढदन्तविशिष्टदन्तशुद्धदन्ताख्याः । तेषु हैमवतवद्युग्मपुरुषाः तदाख्याः अष्टधनुःशतोच्चाः पल्योपमासङ्ख्येयभागायुषः । तथा शिखरिणोऽपि ॥

( इति लवणोदधिसमासः )

धातकीखण्डदक्षिणोत्तराविष्वाकारनगौ सहस्रविस्तृतौ तदर्धोच्चौ चेत्रायामौ पुष्करार्धे च तुल्यावगाहोच्छ्रायाभ्याम् । स्वपरिधिद्विगुणविस्तारा गजदन्ताकृतयो वक्षारा द्विमेखलाश्च पूर्वसूत्रगः वंशधराश्चतुर्गुणाः परस्परतः सर्वसमाश्च ह्रदनदीकुण्डद्वीपकाञ्चनयमकचित्रविचित्रर्षभकूटवृत्तविजयार्धाः स्वायामतश्च दीर्घशैलमुखवनायामाः चेत्रतोऽनुमेयाः नदीनामवगाहश्च स्वविस्तारात् । योजनत्रिलचषट्पञ्चाशत्सहस्रसप्तविंशद्विशतायामौ विद्युत्प्रभगन्धमादनौ पञ्चलचैकान्नसप्ततिसहस्रैकान्नषष्टिशतायामौ माल्यवत्सौमनसौ षोडशलचषड्विंशतिसहस्रषोडशोत्तरशतायामौ विद्युत्प्रभगन्धमादनौ विंशतिलचत्रिचत्वारिंशत्सहस्रैकान्नविंशतायामौ माल्य-

वन्नौमनसौ । वंशधरेष्वाकाररहितौ मुखमध्यबहिःक्षेत्रपरिधिरिषुगुणो द्वादशाधिकद्विशतविभक्तः क्षेत्रविष्कम्भस्तथा भरतादिषु । तत्र द्वे द्वे क्षेत्रे चतुर्गुणचतुर्गणे । लक्षाष्टसप्ततिसहस्रद्विचत्वारिंशाष्टशतराशौ द्विसहस्रोने स्वगुणकारगुणे चतुरशीतिविभक्ते लब्धं धातकीखण्डगिरिव्यासः । बहिर्मन्दराश्चतुरशीतिसहस्रोच्चाश्चत्वारोऽधश्चतुर्नवतिशतविस्तारा अर्धषट्पञ्चाशाष्टाविंशतिसहस्रोपरिवनविशिष्टाः । तत्र च विजयानि कच्छादीनि वक्षाराश्चित्रादयो विद्युत्प्रभादयश्च नद्यो गङ्गाद्या मेरुह्रदकाञ्चनादयश्च धातकीखण्डे द्वीपे द्वयोरप्यर्धयोरीषदवनतान्ताः स्युः ॥

(इति धातकीखण्डः)

अथ कालोदश्चक्रवालतोऽष्टलक्षरुद्रः सहस्रोण्डः एकोनविंशलक्षशूचीको विजयादिचतुर्द्वारः ॥

(इति कालोदधिः)

मानुषोत्तरेणार्धविभक्तः पुष्करार्धो धातकीखण्डवत् तद्विगुणक्षेत्रादिविभागः स्वतश्चतुर्गुणः चतुर्गुणक्षेत्रवर्षधरः । स्वपरिधिद्विगुणविस्तारा गजदन्ताकृतयो वक्षारा द्विमेखलाश्च पूर्वसूत्रगाः वंशधराश्चतुर्गुणाः परस्परतः सर्वसमाश्च ह्रदनदीकुण्डद्वीपकाञ्चनयमकचित्रविचित्रर्षभकूटवृत्तविजयार्धाः स्वायामतश्च दीर्घशैलमुखवनायामाः क्षेत्रतोऽनुमेयाः नदीनामवगाहश्च स्वविस्तारात् । वंशधरेष्वाकाररहितौ मुखमध्यबहिःक्षेत्रपरिधिरिषुगुणो द्वादशाधिकद्विशतविभक्तः क्षेत्रविष्कम्भस्तथाभरतादिषु । वर्षविहीनक्षेत्रराशौ द्विसहस्रोने स्वगुणकारगुणे चतुरशीतिविभक्ते लब्धं पुष्करार्ध-

गिरिव्यासः । बहिर्मन्दराश्चतुरशीतिसहस्रोच्छ्रायाश्चत्वारो ऽधश्चतुर्नवति-
शतविस्तारा अर्धार्धषट्पञ्चाशदष्टाविंशतिसहस्रोपरिवनविशिष्टाः ।

(इति पुष्करार्धः)

**मानुषोत्तरो** वेलाधारिमानो हैमोऽर्धपल्यवदुभयतो वेदिका-
वनखण्डवान् अन्तरुपरिबहिर्मनुष्यसुवर्णदेवावासो मानुषगतिच्छेदी
अन्यत्र देवक्रियाविद्याधरादिभ्यः । न तत्परा बादराग्निमेघविद्युन्नदी-
कालपरिवेषादयः । मानुषोत्तरवत्कुण्डलरुचकौ ।

कालोदपुष्करस्वयम्भूरमणा उदकरसा लवणोदो लावणरसो
वारुणोदश्चित्रपानकवत् खण्डादिचित्रचतुर्विभागगोक्षीरवत् क्षीरोदः
सुक्वथितसद्योविस्यन्दितगोघृतवत् घृतोदः शेषाश्चतुर्जातकवदूर्ध्वभाग-
त्रिभागच्छिन्नेक्षुरसवज्जलाः समुद्राः ॥

लवणकालोदस्वयम्भूरमणा बहुमत्स्यकच्छपा नेतरे ।

वरुणक्षीरघृतेक्षुरसद्वीपोदधिबहिर्**नन्दीश्वरो** विविधविन्यासो
द्यानवान् देवलोकप्रतिस्पर्धी जिनेन्द्रपूजाव्यापृतदेवसंपाताभिरुचिरः
स्वेच्छाविविधक्रियादेवसंभोगरम्यः । तत्र पञ्चविंशतिकक्षेत्रविभाग-
मध्ये चतुर्दिशाश्चत्वारो **ऽञ्जनगिरयो** बहिर्मेरूच्छ्रया दशसहस्राति-
रिक्तविस्तारा मूले उपरि साहस्राः । तेषु जिनायतनानि योज-
नशतायामानि तदर्धविस्ताराणि द्विसप्ततियोजनोच्चानि षोड-
शाष्टाष्टोच्छ्रयविस्तारप्रवेशस्वनामामरावासदेवासुरनागसुवर्णाख्यपृथक्-
पृथक्चतुर्द्वाराणि । तन्मध्ये मणिपीठिकाः षोडशायामविस्तारा
अष्टोत्सेधाः । तदुपरि देवच्छन्दकाः साधिकायामोच्चाः सर्वरत्न-
मयाः । तेषु प्रत्येकं जिनप्रतिमाष्टशतं जिनमानं ताः स्वपरिवार-

वृताः । दामघण्टालम्बूषघण्टिकाष्टमङ्गलतोरणध्वजवन्ति तपनीय-रुचिररजोवालुकाप्रस्तृतानि षोडशपूर्णकलशादिभूषितानि. आयतन-मानमुखमण्डपप्रेक्षामण्डपाक्षपाटकमणिपीठिकास्तूपप्रतिमाचैत्यवृ-क्षेन्द्रध्वजपुष्करिणीक्रमरचनानि नानामणिमयानि । तेभ्यः प्रत्येकं चतुर्दिक्षु लक्षमानाः पुष्करिण्यो नन्दिषेणामोघागोस्तूपासुदर्शनान-न्दोत्तरानन्दासुनन्दानन्दिवर्धनाभद्राविशालाकुमुदापुण्डरीकिणी-विजयावैजयन्तीजयन्तापराजिताः प्राक्क्रमात् । तन्मध्ये स्फाटिका **दधिमुखा** ललामवेदिकोद्यानादिलाञ्छनाश्चतुःषष्टिसहस्रोच्चाः दशाधो विस्तृताः तावदुपरि । तेष्वञ्जनवदायतनानि । द्वीपविदिक्षु **रतिकरका**श्चत्वारो दशसहस्रायामविष्कम्भाः सहस्रोच्चाः सर्वरत्नमयाः झल्लर्याकृतयः । तत्र दक्षिणयोरिन्द्रस्योत्तरयोरीशानस्याष्टाष्टानां महादेवीनां योजनशतसहस्राबाधास्थाना राजधान्यो दिक्षु सुजाता सौमनसा अर्चिर्माली प्रभाकरा पद्मा शिवा शुचिः अञ्जना भूता भूतावतंसा गोस्तूपा सुदर्शना ऽमला ऽप्सरा रोहिणी नवमी नाम रत्ना रत्नोच्चया सर्वरत्ना रत्नसंचया वसुर्वसुमित्रा वसुभागा वसुंधरा नन्दोत्तरा नन्दा उत्तरकुरुर्देवकुरुः कृष्णा कृष्णराजी रामा राम-रक्षिता नाम प्राग्दक्षिणक्रमात् । तत्र देवाः सर्वसंपदन्तः स्वपरिवा-रानुगताः निजपरिकरपरिवृताः पुण्यतिथिषु सुरासुरविद्याधरादि-पूजितानां जिनानामायतनेष्वाष्टाह्निकीपूजाः कुर्वन्ति प्रमुदित-मनसः ॥ (इति नन्दीश्वरद्वीपः)

इति तृतीयमाह्निकं समाप्तम ॥

## अथ चतुर्थमाह्निकम् ।

विष्कम्भवर्गदशगुणकरणी वृत्तक्षेत्रपरिधिः । विष्कम्भः पादाभ्यस्तः स गणितं । विष्कम्भो ऽवगाहोनस्तद्गुणचतुर्गुणस्तन्मूलं ज्या । इषुवर्गः षड्गुणो ज्यावर्गे क्षिप्तस्तन्मूलं धनुःपृष्ठम् । चतुर्गुणेषुवर्गयुक्तविभक्तो ज्यावर्गो विष्कम्भः । धनुर्वर्गज्यावर्गविशेषषड्भागमूलमिषुः । क्षुल्लधनुःपृष्ठापनीतबृहद्धनुःपृष्ठार्धं बाहा ॥

सर्वे गिरि-श्रेणिशिखरतल-कूट-कुण्ड-वन-नदीमुखवन-नदीह्रद-शिला-वाप्यादयो वेदिकावनखण्डवृताः । वापीकुण्डह्रदा दशावगाहाः । पद्मगिरिद्वीपा जलाद्विक्रोशोच्छ्रयाः । मन्दराञ्जनदधिमुखकुण्डलरुचकनगाः सहस्रावगाहाः । शेषा उच्छ्रयपादाः । रूपादिद्विगुणराशिगुणो द्वीपव्यासो नवतिशतविभक्तो भरतादिषु विष्कम्भः । सर्वा नद्यः प्रवहदशगुणा मुखे । विस्तारपञ्चाशद्भागावगाहाः । ह्रदविस्तारो ऽशीतिविभक्तः प्रवहो दक्षिणानाम् । उत्तरासां चत्वारिंशता । मेरूत्तरासु विपर्ययः । प्रवहमुखविस्तारविशेषार्धपञ्चचत्वारिंशत्सहस्रविभक्तिलब्धं द्विगुणोभयवृद्धिः सरिताम् । लक्षाष्टसप्ततिसहस्रद्विचत्वारिंशाष्टशतराशौ द्विसहस्रोने स्वगुणकारगुणे चतुरशीतिविभक्तलब्धं धातकीखण्डगिरिव्यासः । स द्विगुणः पुष्करार्धे । व्यासार्धह्रदविस्तारोनं गिरिणा नदीगतिः । अधिकत्रिशतोत्तरैकान्नविंशतिसहस्रगिरिमस्तकमाप्राग्गङ्गापरेण सिन्धुः रक्तारक्तोदे च । तद्द्विगुणाध्वगाः पुष्करार्धे । सर्वा नद्यः पूर्वपूर्वनदीद्विगुणसहिताः । मुखवनपर्वतनदीमेरुव्यासभद्रशालायामरहित -

द्वीपव्यासषोडशभागो विजयव्यासः । तथान्येषां पूर्ववत् स्यादिति ॥

( इति करणाधिकारः )

जम्बूद्वीपलवणधातकीखण्डकालोदपुष्करवरुणक्षीरघृतेक्षुरसनन्दीश्वरारुणारुणवरारुणाभासकुण्डलरुचकारुणवस्त्रगन्धोत्पलतिलक-पृथिवीनिधानरत्नवर्षधराह्रदनदीविजयवक्षारकल्पेन्द्रपुरमन्दरावासकूटनक्षत्रचन्द्रसूर्यसूर्यवरसूर्याभासदेवनागयक्षभूतस्वयम्भूरमणपर्यन्ता द्वीपसमुद्राः ॥

इति जम्बूद्वीपसमासे चतुर्थमाह्निकं समाप्तम् ॥

कृतिः सिताम्बराचार्यस्य महाकवेरुमास्वातिवाचकस्य इति ॥

जम्बूद्वीपसमास सटीक मू° उमास्वाति टी° विजयसिंह टी° आ°

॥ ए एँ ॥

नमो वीतरागाय ।

श्रीमत्पार्श्वप्रभुपादपद्म-
मानम्य वाचामधिदेवतां च ।
द्वीपोदधिक्षेत्रसमासमस्मि
श्रीवाचकीयं विवृणोमि किंचित् ॥ १ ॥

क्व वाचकवचोवाच्यं क्व वाक्कल्पः किलेदृशः ।
यत्सत्यं चुलुकेनास्मि मोहान्मित्सुर्महोदधिम् ॥ २ ॥

यदि वा किमेतया चिन्तयापि मे । यतः ।

मुदितकौशिकसन्मुनिनायकः
कुवलयप्रतिबोधविधायकः ।
मम निरस्ततमा जिनचन्द्रमा
वितनुते वदतां द्युतिसान्द्रमाम् ॥ ३ ॥

वाक्यं कुत्रापि जैवाभिगममनुसरन् क्वापि तद्वृत्तिवाचम्
जम्बूद्वीपज्ञप्तिं च क्वचिदथ करणौ कुत्रचिच्चानुकुर्वन् ।
तुल्यार्थं जैनभद्रं विवृतिपदयुतं शास्त्रमुद्वीक्षमाणः
प्रायोऽन्यग्रन्थदृष्ट्या विवृतिमहमिमां प्रस्तुवे मुग्धबुद्धिः ॥ ४ ॥

किं च ।

यद्दुर्बोधमतीव तद्विजहति व्यक्तार्थमित्युक्तितो
व्यक्तार्थं तु विवृण्वते हि बहुधा रूपप्रसिद्ध्यादिभिः ।

नेयार्थैरतिफल्गुभिश्च वचनैः किं च भ्रमं कुर्वते
शिष्याणामिति शास्त्रविप्लवकराः प्रायः कुटीकाकृतः ॥५॥

संत्यज्य विस्तरमपास्य तथाल्पजाल-
मत्यर्थमर्थमवगम्य यथावबोधम् ।
आतश्च वाचकवचो विवृतिर्मयेय-
मास्तन्यते ऽबुधजनप्रतिबोधनार्थम् ॥ ६ ॥

इह च ।

धृतार्यचर्याचरणोरुचातुरीं
निर्विघ्नविघ्नौघविघातसुन्दरीम् ।
नमस्क्रियामाहितमंगलक्रियां
श्रीमानुमास्वातिरुवाच वाचकः ॥ ७ ॥

यथा ।

मू० आ० ।

सर्वजननयनकान्तं नखलेखाविसृतदीधितिवितानम् ।
पादयुगचन्द्रमण्डलमभिरक्षतु नः सदा जैनम् ॥ १ ॥

मू० च ।

इति जम्बूद्वीपसमासे चतुर्थमाह्निकं समाप्तम् ॥

कृतिः सिताम्बराचार्यस्य महाकवेरुमास्वातिवाचकस्येति ।

टी० च।

इति: क्रिया प्रस्तावाज्जम्बूद्वीपसमासप्रकरणरूपा सिताम्बराचार्यस्य श्वेताम्बरगुरोर्महाकवेरनेकतत्त्वार्थप्रशमरत्यादिप्रवचनसङ्ग्रहकारस्य यदूचिरे विपश्चिन्निचयनिश्चितार्चितचरणाः श्रीचौलुक्यचूडाचन्द्रार्चितचरणाः श्रीहेमचन्द्रसूरयः श्रीसिद्धहेमचन्द्रनाम्नि स्वोपज्ञशब्दानुशासने "उपोमास्वातिं संग्रहीतार:' (II. 2. 39) इति तथा महावैयाकरणस्य उमास्वातिवाचकस्येति सान्वयसुगृहीतनामधेयस्य तथा चास्य संग्रहकारस्योमा माता स्वातिः पिता तत्सम्बन्धादुमास्वातिः वाचकः पूर्वधरः यत्प्रज्ञापनाटीका वाचकाः पूर्वविदः। इत्याचार्यश्रीविजयसिंहविहिता विनेयजनहिता जम्बूद्वीपसमासटीका समाप्ता॥

जम्बूद्वीपसमासटीका समाप्ता॥

क्वचिज्जम्बूद्वीपप्रज्ञप्तिमथ कुत्रापि करणौं
क्वचिज्जीवाभिजं (!) क्वचिदपि च शास्त्रार्थमपरम्।
क्वचिद्वाचां वृत्तिं क्वचिदपि वचो वाच्यविदुषां
समास्थाय व्याख्यामहमिह महार्थे ऽप्यकरवम्॥ १॥

अविस्पष्टा सूत्रप्रतिकृतिरियं मन्मतिरपि
स्वयं ग्राम्यो वामो ऽप्ययहह कथमास्थेयमपि मे।
क्रियासिद्धौ हेतुः प्रणयिजनताकल्पलतिका
प्रशस्तिः श्रीपार्श्वप्रभुचरणयोः किन्तु विनता॥ २॥

श्रीविक्रमतः क्रमतः समासु तीतासु तिथिरविसमासु (1215)।
विहिता साहारगृहे शरदीयं चारु पल्लिपुरि॥ ३॥

यच्चेहानाभोगान्मतिमान्द्याद्वीतरथा लिखितमास्ते ।
तत्परिमृजन्तु सुजनाः परोपकारैकक्षतमनसः ॥ ४ ॥

तुङ्गः क्षमाभृदुदिताद्भुतभूरिसत्त्वः
शैलीं स्थितिं शुचिमचिन्त्यरुचिं विधानः ।
उद्दामधाममहिमा भुवि वन्द्यपादः
श्रीचन्द्रगच्छ उदयाद्रिरिवास्ति शस्तः ॥ १ ॥

आच्छन्नमीनकेतुस्तमसामवसायहेतुरभ्युदितः ।
रविरिव निस्तारकरुचिरेतस्मिन्नभयदेवविभुः ॥ २ ॥

जगतीह दक्षिणाशाजुषापि विहितोत्तरोदयेन भृशम् ।
वादमहार्णवमुत्तीर्य विश्वमाविष्कृतं येन ॥ ३ ॥

सङ्ख्यातीतगुणौघभास्वदुदयोल्लासी कवीनां मुदे
तन्वानः सदलं स्वरूपममलं दोषागमस्य द्विषन् ।
तच्छिष्यस्तु धनेश्वरप्रभुरभूद्भव्यालिभिः सेवितो
लोके ऽस्मिन्नयरागसंगसुभगः पद्मायमानो ऽपि यः ॥ ४ ॥

जातावज्ञैः पुरस्तादनु विहितदृसैरन्वगात्तैरुडङ्कैः
पश्चाद्दत्तावधानैः पुनरुभयविधानाद्भुखत्वं दधानैः ।
आशङ्काः शङ्कवद्भिस्तदनु च परतो विस्मयस्मेरिताख्यैः
र्यद्वाचो वादिवृन्दैरथ नृपतिममैः काङ्क्षिताः शिक्षिताश्च ॥ ५ ॥ (!)

यस्याहरत्यांसमभृद्धुजिक्रिया
मोचन्तु गुल्फद्वयसं शरीरे ।
गीर्वाणवृन्दोतितवर्णवादः
ततः स जातो ऽजितसिंहसूरिः ॥ ६ ॥ (!)

श्रीवर्धमानमुनिपतिरथ चन्द्रप्रभविभुस्तदनु जज्ञे
भूयः श्रीभद्रसूरिःसुरगुरुरिवानन्तसुरभिगुणः ॥ ७ ॥
एकाहृक्षपणेन पथ्यपि भुजि दीपोत्सवोत्सर्पणा
यात्रा श्रीवटपद्रके रथगिरस्चूडामणेर्विश्रुता । (!)
तीर्थस्योद्धृतिरुज्जयन्तवसतेः श्रीमज्जिनोपज्ञये-
त्येवं यस्य यशांसि दिक्षु विलसन्त्यद्यापि हि स्वेच्छया ॥ ८ ॥
अभवन्मदनाह्वाः शिष्याः श्रीवर्धमानसूरीणाम् ।
तन्मान्या वितमिश्राः पण्डितजिनचन्द्रगणिमिश्राः ॥ ९ ॥
सुचरितकुसुमानि स्वैरमुच्चित्य नित्यं
प्रकटितवरवर्णां सर्वदामोदपूर्णाम् ।
गुरुतरगुणनद्धां यस्यदचो विशुद्धां
विरचयति यदीयां नूतनां नूतिमालाम् ॥ १० ॥
श्रीसर्वदेवसूरिः प्रद्युम्नविभुप्रभुर्यशोदेवः
इति यतिपतयो येषां विनेयतामावहन्नितराम् ॥ ११ ॥
श्रीभद्रेश्वरसूरिशिष्यहरिभद्राचार्यतः सद्गुरोः
प्राप्तश्रीजिनचन्द्रपूज्यचरणान्तेवासितामाश्रितः ।
सूरिः श्रीविजयस्त्विमां व्यरचयत्कल्याणमालाजुषां
शैक्षस्त्वाभयचन्द्रको लिखितवानुद्दामदाख्यः पुरा ॥१२॥

इति जम्बूद्वीपसमासटीका समाप्ता ॥

---

## Appendix D.

Certain passages occurring in other works, attributed to our author Umâsvati but not found in the extant works, thus strengthening the tradition that our author has written 500 works.

i उक्तं च वाचकमुख्यैरुमास्वातिपादैः । स्थानाङ्गवृत्तिः

कृपणे ऽनाथदरिद्रे व्यसनप्राप्ते च रोगशोकहते ।
यद्दीयते कृपार्थादनुकम्पा तद्भवेद्दानम् ॥१॥
अभ्युदये व्यसने वा यत्किंचिद्दीयते सहायार्थम् ।
तत्सङ्गहतो ऽभिमतं मुनिभिर्दानं न मोक्षाय ॥२॥
राजारक्षपुरोहितमधुमुखमावल्लदण्डपाशिषु च ।
यद्दीयते भयार्थं तद्भयदानं बुधैर्ज्ञेयम् ॥३॥
अभ्यर्थितः परेण तु यद्दानं जनसमूहमध्यगतः ।
परचित्तरक्षणार्थं लज्जायास्तद्भवेद्दानम् ॥४॥
नटनर्तमुष्टिकेभ्यो दानं संबन्धिबन्धुमित्रेभ्यः ।
यद्दीयते यशोर्थं गर्वेण तु तद्भवेद्दानम् ॥५॥
हिंसानृतचौर्योद्यतपरदारपरिग्रहप्रसक्तेभ्यः ॥
यद्दीयते हि तेषां तज्जानीयादधर्माय ॥६॥
समतृणमणिमुक्तेभ्यो यद्दानं दीयते सुपात्रेभ्यः ।
अक्षयमतुलमनन्तं तद्दानं भवति धर्माय ॥७॥
शतशः कृतोपकारो दत्तं च सहस्रशो ममानेन ।
अहमपि ददामि किंचित् प्रत्युपकाराय तद्दानम् ॥८॥

ii पञ्चाशकटीका by अभयदेवसूरिः
"उमास्वातिवाचकेनाप्यस्य समर्थितत्वात् तथाहि तेनोक्तं 'सम्यग्दर्शनसम्पन्नः षड्विधावश्यकनिरतश्च श्रावको भवति' इति"

iii धर्मसङ्ग्रह by मानविजयोपाध्याय and read over by यशोविजयमहाराज. Similarly in मुनिचन्द्रसूरि's टीका on धर्मबिन्दु. "उमास्वातिविरचितश्रावकप्रज्ञप्तौ तु अतिथिशब्देन साध्वादयश्चत्वारो गृहीताः ततस्तेषां संविभागः कार्य इत्युक्तं तथा च तत्पाठः, अतिथिसंविभागो नाम अतिथयः साधवः साध्व्यः श्रावकाः श्राविकाश्चैतेषु गृहमुपागतेषु भक्त्याभ्युत्थानासन (प्रदान!) पादप्रमार्जननमस्कारादिभिरर्चयित्वा यथाविभवशक्ति अन्नपानवस्त्रौषधालयादिप्रदानेन संविभागः कार्यः इति" ॥

# Appendix E.

# प्रशमरतिप्रकरणम् ।

## CONTENTS.

# Appendix E.

## ॥ अथ प्रशमरतिः प्रारभ्यते ॥



नाभेयाद्याः सिद्धार्थराजसूनुचरमाश्चरमदेहाः ।
पञ्च नव दश च[१] दशविधधर्मविधिविदो जयन्ति जिनाः ॥१॥
जिनसिद्धाचार्योपाध्यायान् प्रणिपत्य सर्वसाधूंश्च ।
प्रशमरतिस्थैर्यार्थं वक्ष्ये जिनशासनात्किंचित् ॥२॥
यद्यप्यनन्तगमपर्ययार्थहेतुनयशब्दरत्नाढ्यम् ।
सर्वज्ञशासनपुरं प्रवेष्टुमबहुश्रुतैर्दुःखम् ॥३॥
श्रुतबुद्धिविभवपरिहीणकस्तथाप्यहमशक्तिमविचिन्त्य ।
द्रमक इवावयवोञ्छकमन्वेष्टुं तत्प्रवेशेप्सुः ॥४॥
बहुभिर्जिनवचनार्णवपारगतैः कविवृषैर्महामतिभिः ।
पूर्वमनेकाः प्रथिताः प्रशमजननशास्त्रपद्धतयः ॥५॥
ताभ्यो विसृताः श्रुतवाक्पुलाकिकाः प्रवचनाश्रिताः काश्चित् ।
पारंपर्यादुच्छेषिकाः कृपणकेन संहृत्य ॥६॥
तद्भक्तिबलार्पितया मयाप्यविमलाल्पया स्वमतिशक्त्या ।
प्रशमेष्टतयानुसृता विरागमार्गैकपदिकेयम् ॥७॥
यद्यप्यवगीतार्था न वा कठोरप्रकृष्टभावार्था ।
सद्भिस्तथापि मय्यनुकम्पैकरसैरनुग्राह्यम् ॥८॥

---

१ P. omits.

को ऽत्र निमित्तं वक्ष्यति निसर्गमतिसुनिपुणो ऽपि वाद्यन्यत्* ।
दोषमलिने ऽपि सन्तो यद्गुणसारग्रहणदक्षाः ॥९॥
सद्भिः सुपरिगृहीतं यत्किंचिदपि प्रकाशतां याति ।
मलिनो ऽपि यथा हरिणः प्रकाशते पूर्णचन्द्रस्थः ॥१०॥
बालस्य यथा वचनं काहलमपि शोभते पितृसकाशे ।
तद्वत्सज्जनमध्ये प्रलपितमपि सिद्धिमुपयाति ॥११॥
ये तीर्थकृत्प्रणीता भावास्तदनन्तरैश्च परिकथिताः ।
तेषां बहुशो ऽप्यनुकीर्तनं भवति पुष्टिकरमेव ॥१२॥
यद्वद्विषघातार्थं मन्त्रपदे न पुनरुक्तदोषो ऽस्ति ।
तद्वद्रागविषघ्नं पुनरुक्तमदुष्टमर्थपदम् ॥१३॥[१]
यद्वदुपयुक्तपूर्वमपि भैषजं सेव्यते ऽर्त्तिनाशाय ।
तद्वद्रागार्त्तिहरं बहुशो ऽप्यनुयोज्यमर्थपदम् ॥१४॥
वृत्त्यर्थं कर्म यथा तदेव लोकः पुनः पुनः कुरुते ।
एवं विरागवार्ताहेतुरपि पुनः पुनश्चिन्त्यः ॥१५॥
दृढतामुपैति वैराग्यभावना येन येन भावेन ।
तस्मिंस्तस्मिन् कार्यः कायमनोवाग्भिरभ्यासः ॥१६॥
माध्यस्थ्यं वैराग्यं विरागता शान्तिरुपशमः प्रशमः ।
दोषक्षयः कषायविजयश्च वैराग्यपर्यायाः ॥१७॥
इच्छा मूर्च्छा कामः स्नेहो गार्ध्यं ममत्वमभिनन्दः ।
अभिलाष इत्यनेकानि रागपर्यायवचनानि ॥१८॥

---

* Var. H. वा ह्यन्यत्.

---

१ A. Interchanges.

ईर्ष्या रोषो दोषो द्वेषः परिवादमत्सरासूयाः ।
वैरप्रचण्डनाद्या नैके द्वेषस्य पर्यायाः ॥१९॥
रागद्वेषपरिगतो मिथ्यात्वोपहतकलुषया दृष्ट्या ।
पञ्चास्रवमलबहुलार्त्तरौद्रतीव्राभिसंधानः ॥२०॥
कार्याकार्यविनिश्चयसंक्लेशविशुद्धिलक्षणैर्मूढः ।
आहारभयपरिग्रहमैथुनसंज्ञाकलिग्रस्तः ॥२१॥
क्लिष्टाष्टकर्मबन्धनबद्धनिकाचितगुरुर्गतिशतेषु ।
जन्ममरणैरजस्रं बहुविधपरिवर्तनाभ्रान्तः ॥२२॥
दुःखसहस्रनिरन्तरगुरुभाराक्रान्तकर्षितः करुणः ।
विषयसुखानुगततृषः कषायवक्तव्यतामेति ।२३॥
स क्रोधमानमायालोभैरतिदुर्जयैः परामृष्टः ।
प्राप्नोति याननर्थान् कस्तानुद्देष्टुमपि शक्तः ॥२४॥
क्रोधात्प्रीतिविनाशं मानाद्विनयोपघातमाप्नोति ।
शाठ्यात्प्रत्ययहानिं सर्वगुणविनाशनं लोभात् ॥२५॥
क्रोधः परितापकरः सर्वस्योद्वेगकारकः क्रोधः ।
वैरानुषङ्गजनकः क्रोधः क्रोधः सुगतिहन्ता ॥२६॥
श्रुतशीलविनयसंदूषणस्य धर्मार्थकामविघ्नस्य ।
मानस्य को ऽवकाशं मुहूर्तमपि पण्डितो दद्यात् ॥२७॥
मायाशीलः पुरुषो यद्यपि न करोति किंचिदपराधम् ।
सर्प इवाविश्वास्यो भवति तथाप्यात्मदोषहतः ॥२८॥
सर्वविनाशाश्रयिणः सर्वव्यसनैकराजमार्गस्य ।
लोभस्य को मुखगतः क्षणमपि दुःखान्तरमुपेयात् ॥२९॥

एवं क्रोधो मानो माया लोभश्च दुःखहेतुत्वात् ।
सत्त्वानां भवसंसारदुर्गमार्गप्रणेतारः ॥ ३० ॥

ममकाराहंकारावेषां मूलं पदद्वयं भवति ।
रागद्वेषावित्यपि तस्यैवान्यस्तु पर्यायः ॥ ३१ ॥
मायालोभकषायश्चेत्येतद्रागसंज्ञितं द्वंद्वम् ।
क्रोधो मानश्च पुनर्द्वेष इति समासनिर्दिष्टः ॥ ३२ ॥
मिथ्यादृष्ट्यविरमणप्रमादयोगास्तयोर्बलं दृष्टम् ।
तदुपगृहीतावष्टविधकर्मबन्धस्य हेतू तौ ॥ ३३ ॥

स ज्ञानदर्शनावरणवेद्यमोहायुषां तथा नाम्नः ।
गोत्रान्तराययोश्चेति कर्मबन्धो ऽष्टधा मौलः ॥ ३४ ॥
पञ्चनवद्व्यष्टाविंशतिकचतुःषट्कसप्तगुणभेदः ।
द्विकपञ्चभेद इति सप्तनवतिभेदास्तथोत्तरतः ॥ ३५ ॥
प्रकृतिरियमनेकविधा स्थित्यनुभावप्रदेशतस्तस्याः ।
तीव्रो मन्दो मध्य इति भवति बन्धोदयविशेषः ॥ ३६ ॥
तत्र प्रदेशबन्धो योगात्तदनुभवनं कषायवशात् ।
स्थितिपाकविशेषस्तस्य भवति लेश्याविशेषेण ॥ ३७ ॥
ताः कृष्णनीलकापोततैजसीपद्मशुक्लनामानः ।
श्लेष इव वर्णबन्धस्य कर्मबन्धस्थितिविधात्र्यः ॥ ३८ ॥

कर्मोदयाद्भवगतिर्भवगतिमूला शरीरनिर्वृत्तिः ।
देहादिन्द्रियविषया विषयनिमित्ते च सुखदुःखे ॥ ३९ ॥
दुःखद्विट् सुखलिप्सुर्मोहान्धत्वाददृष्टगुणदोषः ।
यां यां करोति चेष्टां तया तया दुःखमादत्ते ॥ ४० ॥

कलरिभितमधुरगांधर्वतूर्ययोषिद्विभूषणरवाद्यैः ।
श्रोत्रावबद्धहृदयो हरिण इव विनाशमुपयाति ॥४१॥
गतिविभ्रमेङ्गिताकारहास्यलीलाकटाक्षविक्षिप्तः ।
रूपावेशितचक्षुः शलभ इव विपद्यते विवशः ॥४२॥
स्नानाङ्गरागवर्त्तिकवर्णकधूपाधिवासपटवासैः ।
गन्धभ्रमितमनस्को मधुकर इव नाशमुपयाति ॥४३॥
मिष्टान्नपानमांसौदनादिमधुररसविषयगृद्धात्मा ।
गलयन्त्रपाशबद्धो मीन इव विनाशमुपयाति ॥४४॥
शयनासनसंबाधन[1]सुरतस्नानानुलेपनासक्तः ।
स्पर्शव्याकुलितमतिर्गजेन्द्र इव बध्यते मूढः ॥४५॥
एवमनेके दोषाः प्रणष्टशिष्टेष्टदृष्टि[2]चेष्टानाम् ।
दुर्नियमितेन्द्रियाणां भवन्ति बाधाकारा बहुशः ॥४६॥
एकैकविषयसङ्गाद्रागद्वेषातुरा विनष्टास्ते ।
किं पुनरनियमितात्मा जीवः पञ्चेन्द्रियवशार्त्तः ॥४७॥
न हि सो ऽस्तीन्द्रियविषयो येनाभ्यस्तेन नित्यतृषितानि ।
तृप्तिं प्राप्नुयुरक्षाण्यनेकमार्गप्रलीनानि ॥४८॥
कश्चिच्छुभो ऽपि विषयः परिणामवशात्पुनर्भवत्यशुभः ।
कश्चिदशुभो ऽपि भूत्वा कालेन पुनः शुभीभवति ॥४९॥
कारणवशेन यद्यत् प्रयोजनं जायते यथा यत्र ।
तेन तथा तं विषयं शुभमशुभं वा प्रकल्पयति ॥५०॥

---

१ संवाहनं=अंगमर्दनम् संबाधनं=विश्रामणा.

२ Var. H. दृष्ट.

अन्येषां यो विषयः स्वाभिप्रायेण भवति पुष्टिकरः* ।
स्वमतिविकल्पाभिरतास्तमेव भूयो द्विषन्त्यन्ये ॥५१॥
तानेवार्थान्द्विषतस्तानेवार्थान्प्रलीयमानस्य ।
निश्चयतो ऽस्यानिष्टं न विद्यते किंचिदिष्टं वा ॥५२॥
रागद्वेषोपहतस्य केवलं कर्मबन्ध एवास्य ।
नान्यः स्वल्पो ऽपि गुणो ऽस्ति यः परत्रेह च श्रेयान् ॥५३॥
यस्मिन्निन्द्रियविषये शुभमशुभं वा निवेशयति भावम् ।
रक्तो वा द्विष्टो वा स बन्धहेतुर्भवति तस्य ॥५४॥
स्नेहाभ्यक्तशरीरस्य रेणुना श्लिष्यते यथा गात्रम् ।
रागद्वेषाक्लिन्नस्य कर्मबन्धो भवत्येवम् ॥५५॥
एवं रागद्वेषौ[1] मोहो मिथ्यात्वमविरतिश्चैव ।
एभिः प्रमादयोगानुगैः समादीयते कर्म ॥५६॥
कर्ममयः संसारः संसारनिमित्तकं पुनर्दुःखम् ।
तस्माद्रागद्वेषादयस्तु भवसंततेर्मूलम् ॥५७॥
एतद्दोषमहासंचयजालं शक्यमप्रमत्तेन ।
प्रशमस्थितेन घनमप्युद्वेष्टयितुं निरवशेषम् ॥५८॥
अस्य तु मूलनिबन्धं ज्ञात्वा तच्छेदनोद्यमपरस्य ।
दर्शनचारित्रतपःस्वाध्यायध्यानयुक्तस्य ॥५९॥
प्राणवधानृतभाषणपरधनमैथुनममत्वविरतस्य ।
नवकोट्युद्गमशुद्धोञ्छमात्रयात्राधिकारस्य ॥६०॥

---

* Var. H. तुष्टिकरः.

---

१ H. रागो द्वेषो.

जिनभाषितार्थसद्भावभाविनो विदितलोकतत्त्वस्य ।
अष्टादशशीलसहस्रधारणकृतप्रतिज्ञस्य ॥ ६१ ॥
परिणाममपूर्वमुपागतस्य शुभभावनाध्यवसितस्य ।
अन्योन्यमुत्तरोत्तरविशेषमभिपश्यतः समये ॥ ६२ ॥
वैराग्यमार्गसंप्रस्थितस्य संसारवासचकितस्य ।
स्वहितार्थाभिरतमतेः शुभेयमुत्पद्यते चिन्ता ॥ ६३ ॥
भवकोटीभिरसुलभं मानुष्यं प्राप्य कः प्रमादो मे ।
न च गतमायुर्भूयः प्रत्येत्यपि देवराजस्य ॥ ६४ ॥
आरोग्यायुर्बलसमुदयाश्चला वीर्यमनियतं धर्मे ।
तल्लब्ध्वा हितकार्ये मयोद्यमः सर्वथा कार्यः ॥ ६५ ॥
शास्त्रागमादृते न हितमस्ति न च शास्त्रमस्ति विनयमृते ।
तस्माच्छास्त्रागमलिप्सुना विनीतेन भवितव्यम् ॥ ६६ ॥
कुलरूपवचनयौवनधनमित्रैश्वर्यसंपदपि पुंसाम् ।
विनयप्रशमविहीना न शोभते निर्जलेव नदी ॥ ६७ ॥
न तथा सुमहार्घ्यैरपि वस्त्राभरणैरलंकृतो भाति ।
श्रुतशीलमूलनिकषो विनीतविनयो यथा भाति ॥ ६८ ॥
गुर्वायत्ता यस्माच्छास्त्रारम्भा भवन्ति सर्वे ऽपि ।
तस्माद्गुर्वाराधनपरेण हितकांक्षिणा भाव्यम् ॥ ६९ ॥
धन्यस्योपरि निपतत्यहितसमाचरणघर्मनिर्वापी ।
गुरुवदनमलयनिसृतो वचनसरसचन्दनस्पर्शः ॥ ७० ॥
दुःप्रतिकारौ मातापितरौ स्वामी गुरुश्च लोके ऽस्मिन् ।
तत्र गुरुरिहामुत्र च सुदुष्करतरप्रतीकारः ॥ ७१ ॥

विनयफलं शुश्रूषा गुरुशुश्रूषाफलं श्रुतज्ञानम् ।
ज्ञानस्य फलं विरतिर्विरतिफलं चास्रवनिरोधः ॥७२॥
संवरफलं तपोबलमथ तपसो निर्जरा फलं दृष्टम् ।
तस्मात्क्रियानिवृत्तिः क्रियानिवृत्तेरयोगित्वम् ॥७३॥
योगनिरोधाद्भवसंततिक्षयः संततिक्षयान्मोक्षः ।
तस्मात्कल्याणानां सर्वेषां भाजनं विनयः ॥७४॥
विनयव्यपेतमनसो गुरुविद्वत्साधुपरिभवनशीलाः ।
त्रुटिमात्रविषयसङ्गादजरामरवन्निरुद्विग्नाः ॥७५॥
केचित्सातर्द्धिरसातिगौरवात्सांप्रतेक्षिणः पुरुषाः ।
मोहात्समुद्रवायसवदामिषपरा विनश्यन्ति ॥७६॥
ते जात्यहेतुदृष्टान्तसिद्धमविरुद्धमजरमभयकरम् ।
सर्वज्ञवाग्रसायनमुपनीतं नाभिनन्दन्ति ॥७७॥
यद्वत्कश्चित् क्षीरं मधुशर्करया सुसंस्कृतं हृद्यम् ।
पित्तार्दितेन्द्रियत्वाद्वितथमतिर्मन्यते कटुकम् ॥७८॥
तद्वन्निश्चयमधुरमनुकम्पया सद्भिरभिहितं पथ्यम् ।
तथ्यमवमन्यमाना रागद्वेषोदयोद्वृत्ताः ॥७९॥
जातिकुलरूपबललाभबुद्धिवाल्लभ्यकश्रुतमदान्धाः ।
क्लीबाः परत्र चेह च हितमप्यर्थं न पश्यन्ति ॥८०॥
ज्ञात्वा भवपरिवर्ते जातीनां कोटीशतसहस्रेषु ।
हीनोत्तममध्यत्वं को जातिमदं बुधः कुर्यात् ॥८१॥
नैकाञ्जातिविशेषानिन्द्रियनिर्वृत्तिपूर्वकान्सत्त्वाः ।
कर्मवशाद्गच्छन्त्यत्र कस्य का शाश्वती जातिः ॥८२॥

रूपबलश्रुतमतिशीलविभवपरिवर्जितांस्तथा दृष्ट्वा ।
विपुलकुलोत्पन्नानपि ननु कुलमानः परित्याज्यः ॥८३॥
यस्याशुद्धं शीलं प्रयोजनं तस्य किं कुलमदेन ।
स्वगुणाभ्यलंकृतस्य हि किं शीलवतः कुलमदेन ॥८४॥
कः शुक्रशोणितसमुद्भवस्य सततं चयापचयिकस्य ।
रोगजरापाश्रयिणो मदावकाशो ऽस्ति रूपस्य ॥८५॥
नित्यं परिशीलनीये[१] त्वङ्मांसाच्छादिते कलुषपूर्णे ।
निश्चयविनाशधर्मिणि रूपे मदकारणं किं स्यात् ॥८६॥
बलसमुदितो ऽपि यस्मान्नरः क्षणेन विबलत्वमुपयाति ।
बलहीनो ऽपि च बलवान् संस्कारवशात्पुनर्भवति ॥८७॥
तस्मादनियतभावं बलस्य सम्यग्विभाव्य बुद्धिबलात् ।
मृत्युबले चाबलतां मदं न कुर्याद्बलेनापि ॥८८॥
उदयोपशमनिमित्तौ लाभालाभावनित्यकौ मत्वा ।
नालाभे वैक्लव्यं न च लाभे विस्मयः कार्यः ॥८९॥
परशक्त्यभिप्रसादात्मकेन किंचिदुपयोग[२]योग्येन ।
विपुलेनापि यतिवृषा लाभेन मदं न गच्छन्ति ॥९०॥
ग्रहणोद्ग्राहणनवकृतिविचारणार्थावधारणाद्येषु ।
बुद्ध्यङ्गविधिविकल्पेष्वनन्तपर्यायवृद्धेषु ॥९१॥
पूर्वपुरुषसिंहानां विज्ञानातिशयसागरानन्त्यम् ।
श्रुत्वा सांप्रतपुरुषाः कथं स्वबुद्ध्या मदं यान्ति ॥९२॥
द्रमकैरिव चटुकर्मकमुपकारनिमित्तकं परजनस्य ।

१ H. नित्यपरिशीलनीये. २ A. उपभोग

ज्ञात्वा यद्वाल्लभ्यकमवाप्यते को मदस्तेन ॥९३॥
गर्वं परप्रसादात्मकेन वाल्लभ्यकेन यः कुर्यात् ।
तं वाल्लभ्यकविगमे शोकसमुदयः पराम्टशति ॥९४॥
माषतुषोपाख्यानं श्रुतपर्यायप्ररूपणां चैव ।
श्रुत्वातिविस्मयकरं च विकरणं स्थूलभद्रमुनेः ॥९५॥
संपर्कोद्यमसुलभं चरणकरणसाधकं श्रुतज्ञानम् ।
लब्ध्वा सर्वमदहरं तेनैव मदः कथं कार्यः ॥९६॥
एतेषु मदस्थानेषु निश्चये न च गुणो ऽस्ति कश्चिदपि ।
केवलमुन्मादः स्वहृदयस्य संसारवृद्धिश्च ॥९७॥
जात्यादिमदोन्मत्तः पिशाचवद्भवति दुःखितश्चेह ।
जात्यादिहीनतां परभवे च निःसंशयं लभते ॥९८॥
सर्वमदस्थानानां मूलोद्घातार्थिना सदा यतिना ।
आत्मगुणैरुत्कर्षः परपरिवादश्च संत्याज्यः ॥९९॥
परपरिभवपरिवादादात्मोत्कर्षाच्च बध्यते कर्म ।
नीचैर्गोत्रं प्रतिभव[1]मनेकभवकोटिदुर्मोचम् ॥१००॥
कर्मोदयनिर्वृत्तं हीनोत्तममध्यमं मनुष्याणाम् ।
तद्विधमेव तिरश्चां योनिविशेषान्तरविभक्तम् ॥१०१॥
देशकुलदेहविज्ञानायुर्बलभोगभूतिवैषम्यम् ।
दृष्ट्वा कथमिह विदुषां भवसंसारे रतिर्भवति ॥१०२॥
अपरिगणितगुणदोषः स्वपरोभयबाधको भवति यस्मात् ।
पञ्चेन्द्रियबलविबलो रागद्वेषोदयनिबद्धः ॥१०३॥

---

१ A. प्रतिभयं.

तस्माद्रागद्वेषत्यागे पञ्चेन्द्रियप्रशमने च ।
शुभपरिणामावस्थितिहेतोर्यत्नेन घटितव्यम् ॥१०४॥
तत्कथमनिष्टविषयाभिकांक्षिणा भोगिना[१] वियोगो वै ।
सुव्याकुलहृदयेनापि निश्चयेनागमः कार्यः ॥१०५॥
आदावत्यभ्युदया मध्ये शृङ्गारहास्यदीप्तरसाः ।
निकषे विषया बीभत्सकरुणलज्जाभयप्रायाः ॥१०६॥
यद्यपि निषेव्यमाणा मनसः परितुष्टिकारका विषयाः ।
किंपाकफलादनवद्भवन्ति पश्चादतिदुरन्ताः ॥१०७॥
यद्वच्छाकाष्टादशमन्नं बहुभक्ष्यपेयवत्स्वाद् ।
विषसंयुक्तं भुक्तं विपाककाले विनाशयति ॥१०८॥
तद्वदुपचारसंभृतरम्यकरागरससेविता विषयाः ।
भवशतपरम्परास्वपि दुःखविपाकानुबन्धकराः ॥१०९॥
अपि पश्यतां समक्षं नियतमनियतं पदे पदे मरणम् ।
येषां विषयेषु रतिर्भवति न तान्मानुषान्गणयेत् ॥११०॥
विषयपरिणामनियमो मनोनुकूलविषयेष्वनुप्रेक्ष्यः ।
द्विगुणो ऽपि च नित्यमनुग्रहो ऽनवद्यश्च संचिन्त्यः ॥१११॥
इति गुणदोषविपर्यासदर्शनाद्विषयमूर्च्छितो ह्यात्मा ।
भवपरिवर्तनभीरुभिराचारमवेक्ष्य परिरक्ष्यः ॥११२॥
सम्यक्त्वज्ञानचारित्रतपोवीर्यात्मको जिनैः प्रोक्तः ।
पञ्चविधो ऽयं विधिवत्साध्वाचारः समनुगम्यः[२] ॥११३॥
षड्जीवकाययतना लौकिकसन्तानगौरवत्यागः ।

---

१ Var. H. कांक्षिणां भोगिनां.    २ H. समधिगम्य॰.

शीतोष्णादिपरीषहविजयः सम्यक्त्वमविकम्प्यम् ॥१ १ ४॥
संसारादुद्वेगः क्षपणोपायश्च कर्मणां निपुणः ।
वैयावृत्त्योद्योगस्तपोविधिर्योषितां त्यागः ॥१ १ ५॥
विधिना भैक्ष्यग्रहणं स्त्रीपशुपण्डकविवर्जिता शय्या ।
ईर्याभाषाम्बरभाजनैषणावग्रहाः शुद्धाः ॥१ १ ६॥
स्थाननिषद्याव्युत्सर्गशब्दरूपक्रियाः परान्योन्या[1] ।
पञ्चमहाव्रतदार्ढ्यं विमुक्तता सर्वसङ्गेभ्यः ॥१ १ ७॥
साध्वाचारः खल्वयमष्टादशपदसहस्रपरिपठितः ।
सम्यगनुपाल्यमानो रागादीन्मूलतो हन्ति ॥१ १ ८॥
आचाराध्ययनोक्तार्थभावनाचरणगुप्तहृदयस्य ।
न तदस्ति कालविवरं यत्र क्वचनाभिभवनं स्यात् ॥१ १ ९॥
पैशाचिकमाख्यानं श्रुत्वा गोपायनं च कुलवध्वाः ।
संयमयोगैरात्मा निरन्तरं व्यापृतः कार्यः ॥१ २ ०॥
क्षणविपरिणामधर्मा मर्त्यानामृद्धिसमुदयाः सर्वे ।
सर्वे च शोकजनकाः संयोगा विप्रयोगान्ताः ॥१ २ १॥
भोगसुखैः किमनित्यैर्भयबहुलैः काङ्क्षितैः परायत्तैः ।
नित्यमभयमात्मस्थं प्रशमसुखं तत्र यतितव्यम् ॥१ २ २॥
यावत्स्वविषयलिप्सोरक्षसमूहस्य चेष्टते तुष्टौ ।
तावत्तस्यैव जये वरतरमशठं कृतो यत्नः ॥१ २ ३॥
यत्सर्वविषयकाङ्क्षोद्भवं सुखं प्राप्यते सरागेण ।
तदनन्तकोटिगुणितं मुधैव लभते विगतरागः ॥१ २ ४॥

---

१ परक्रिया अन्योन्यक्रिया.

इष्टवियोगाप्रियसंप्रयोगकांक्षासमुद्भवं दुःखम् ।
प्राप्नोति यत्सरागो न संस्पृशति तद्विगतरागः ॥१२५॥
प्रशमितवेदकषायस्य हास्यरत्यरतिशोकनिभृतस्य ।
भयकुत्सानिरभिभवस्य यत्सुखं तत्कुतोऽन्येषाम् ॥१२६॥
सम्यग्दृष्टिर्ज्ञानी ध्यानतपोबलयुतोऽप्यनुपशान्तः ।
तं लभते न[1] गुणं यं प्रशमगुणमुपाश्रितो[2] लभते ॥१२७॥
नैवास्ति राजराजस्य तत्सुखं नैव देवराजस्य ।
यत्सुखमिहैव साधोर्लोकव्यापाररहितस्य ॥१२८॥
संत्यज्य लोकचिन्तामात्मपरिज्ञानचिन्तनेऽभिरतः ।
जितलोभरोषमदनः सुखमास्ते निर्जरः साधुः ॥१२९॥
या चेह लोकवार्ता शरीरवार्ता तपस्विनां या च ।
सद्धर्मचरणवार्तानिमित्तकं तद्द्वयमपीष्टम् ॥१३०॥
लोकः खल्वाधारः सर्वेषां ब्रह्मचारिणां[3] यस्मात् ।
तस्माल्लोकविरुद्धं धर्मविरुद्धं च संत्याज्यम् ॥१३१॥
देहो नासाधनको लोकाधीनानि साधनान्यस्य ।
सद्धर्मानुपरोधात्तस्माल्लोकोऽभिगमनीयः ॥१३२॥
दोषेणानुपकारी भवति परो येन येन विद्विष्टः[4] ।
स्वयमपि तद्दोषपदं सदा प्रयत्नेन परिहार्यम् ॥१३३॥
पिण्डैषणानिरुक्तः कल्प्याकल्प्यस्य[5] यो विधिः सूत्रे ।
ग्रहणोपभोगनियतस्य तेन नैवामयभयं स्यात् ॥१३४॥

---

१ H. न लभते.　२ A. उपाश्रितो.　३ H. धर्मचारिणां.
४ A. विद्वेष्टि = क्रुध्यति　५ A. कल्प्य. for कल्प्य here & hereafter.

अणलेपाद्यो पाङ्गवद्सङ्गयोगभरमात्रयात्रार्थम् ।
पन्नग इवाभ्यवहरेदाहारं पुत्रपलवच्च ॥ १ ३ ५ ॥
गुणवदमूर्छितमनसा तद्विपरीतमपि चाप्रदुष्टेन ।
दारूपमधृतिना भवति कल्पमास्वाद्यमास्वाद्यम् ॥ १ ३ ६ ॥
कालं क्षेत्रं मात्रां स्वात्म्यं[1] द्रव्यगुरुलाघवं स्वबलम् ।
ज्ञात्वा यो ऽभ्यवहार्यं भुंक्ते किं भेषजैस्तस्य ॥ १ ३ ७ ॥
पिण्डः शय्या वस्त्रैषणादि पात्रैषणादि यच्चान्यत् ।
कल्प्याकल्प्यं सद्धर्मदेहरक्षानिमित्तोक्तम् ॥ १ ३ ८ ॥
कल्पाकल्पविधिज्ञः संविग्नसहायको विनीतात्मा ।
दोषमलिने ऽपि लोके प्रविहरति मुनिर्निरुपलेपः ॥ १ ३ ९ ॥
यद्वत्पङ्काधारमपि पङ्कजं नोपलिप्यते तेन ।
धर्मोपकरणधृतवपुरपि साधुरलेपकस्तद्वत् ॥ १ ४ ० ॥
यद्वत्तुरगः सत्स्वप्याभरणविभूषणेष्वनभिषक्तः ।
तद्वदुपग्रहवानपि न सङ्गमुपयाति निर्ग्रन्थः ॥ १ ४ १ ॥
ग्रन्थः कर्माष्टविधं मिथ्यात्वाविरतिदुष्टयोगाश्च ।
तज्जयहेतोरशठं संयतते यः स निर्ग्रन्थः ॥ १ ४ २ ॥
यज्ज्ञानशीलतपसामुपग्रहं निग्रहं च दोषाणाम् ।
कल्पयति निश्चये यत्तत्कल्पमकल्पमवशेषम् ॥ १ ४ ३ ॥
यत्पुनरुपघातकरं सम्यक्त्वज्ञानशीलयोगानाम् ।
तत्कल्पमप्यकल्पं प्रवचनकुत्साकरं यच्च ॥ १ ४ ४ ॥
किंचिच्छुद्धं कल्प्यमकल्प्यं स्यात्स्यादकल्प्यमपि कल्प्यम् ।

---

१ A. सात्म्यं.

पिण्डः शय्या वस्त्रं पात्रं वा भेषजाद्यं वा ॥१४५॥

देशं कालं पुरुषमवस्थामुपयोग[1]शुद्धिपरिणामान् ।

प्रसमीक्ष्य भवति कल्प्यं नैकान्तात्कल्प्यते कल्प्यम् ॥१४६॥

तच्चिन्त्यं तद्भाष्यं तत्कार्यं भवति सर्वथा यतिना ।

नात्मपरोभयबाधकमिह यत्परतश्च सर्वाद्धम् ॥१४७॥

सर्वार्थेष्विन्द्रियसंगतेषु वैराग्यमार्गविघ्नेषु ।

परिसङ्ख्यानं कार्यं कार्यं परमिच्छता नियतम् ॥१४८॥

भावयितव्यमनित्यत्वमशरणत्वं तथैकतान्यत्वे ।

अशुचित्वं संसारः कर्मास्रवसंवरविधिश्च ॥१४९॥

निर्जरणलोकविस्तरधर्मस्वाख्याततत्त्वचिन्ताश्च ।

बोधेः सुदुर्लभत्वं च भावना द्वादश विशुद्धाः ॥१५०॥

दृष्टजनसंप्रयोगर्द्धिविषयसुखसंपदस्तथारोग्यम् ।

देहश्च यौवनं जीवितं च सर्वाण्यनित्यानि ॥१५१॥

जन्मजरामरणभयैरभिद्रुते व्याधिवेदनाग्रस्ते ।

जिनवरवचनादन्यत्र नास्ति शरणं क्वचिल्लोके ॥१५२॥

एकस्य जन्ममरणे गतयश्च शुभाशुभा भवावर्ते ।

तस्मादाकालिकहितमेकेनैवात्मनः कार्यम् ॥१५३॥

अन्यो ऽहं स्वजनात्परिजनाच्च विभवाच्छरीरकाच्चेति ।

यस्य नियता मतिरियं न बाधते तं हि शोककलिः ॥१५४॥

अशुचिकरणसामर्थ्यादाद्युत्तरकारणाशुचित्वाच्च ।

देहस्याशुचिभावः स्थाने स्थाने भवति चिन्त्यः ॥१५५॥

---

[1] Var. H. उपघात.

माता भूत्वा दुहिता भगिनी भार्या च भवति संसारे ।
व्रजति सुतः पितृतां भ्रातृतां पुनः शत्रुतां चैव ॥१५६॥

मिथ्यादृष्टिरविरतः प्रमादवान् यः कषायदण्डरुचिः ।
तस्य तथास्रवकर्मणि यतेत तन्निग्रहे तस्मात् ॥१५७॥

या पुण्यपापयोरग्रहणे वाक्कायमानसी वृत्तिः[1] ।
सुसमाहितो हितः संवरो वरददेशितश्चिन्त्यः ॥१५८॥

यद्वद्विशोषणाद्[2]पचितो ऽपि यत्नेन जीर्यते दोषः ।
तद्वत्कर्मोपचितं निर्जरयति संवृतस्तपसा ॥१५९॥

लोकस्याधस्तिर्यग्वि[3]चिन्तयेदूर्ध्वमपि च बाहल्यम् ।
सर्वत्र जन्ममरणे रूपिद्रव्योपयोगांश्च ॥१६०॥

धर्मो ऽयं स्वाख्यातो जगद्धितार्थं जिनैर्जितारिगणैः ।
ये ऽत्र रतास्ते संसारसागरं लीलयोत्तीर्णाः ॥१६१॥

मानुष्यकर्मभूम्यार्यदेशकुलकल्यतायुरुपलब्धौ ।
श्रद्धाकथकश्रवणेषु सत्स्वपि सुदुर्लभा बोधिः ॥१६२॥

तां दुर्लभां भवशतैर्लब्ध्वाप्यतिदुर्लभा पुनर्विरतिः ।
मोहाद्रागात्कापथविलोकनाद्गौरववशाच्च ॥१६३॥

तत्प्राप्य विरतिरत्नं विरागमार्गविजयो दुरधिगम्यः ।
इन्द्रियकषायगौरवपरीषहसपत्नविधुरेण ॥१६४॥

तस्मात्परीषहेन्द्रियगौरवगणनायकान्कषायरिपून् ।
क्षान्तिबलमार्दवार्जवसंतोषैः साधयेद्धीरः ॥१६५॥

---

१ Var. H. गुप्तिः.  २ A. विशेषणात्.  ३ A. तिर्यक्तवं.

संचिन्त्य कषायाणामुदयनिमित्तमुपशान्तिहेतुं च ।
त्रिकरणशुद्धमपि तयोः परिहारासेवने कार्ये ॥ १६६ ॥

सेव्यः क्षान्तिर्मार्दवमार्जवशौचे च संयमत्यागौ ।
सत्यतपोब्रह्माकिंचन्यानीत्येष धर्मविधिः ॥ १६७ ॥
धर्मस्य दया मूलं न चाक्षमावान्दयां समादत्ते ।
तस्माद्यः क्षान्तिपरः स साधयत्युत्तमं धर्मम् ॥ १६८ ॥
विनयायत्ताश्च गुणाः सर्वे विनयश्च मार्दवायत्तः ।
यस्मिन्मार्दवमखिलं स सर्वगुणभाक्त्वमाप्नोति ॥ १६९ ॥
नानार्जवो विशुध्यति न धर्ममाराधयत्यशुद्धात्मा ।
धर्मादृते न मोक्षो मोक्षात्परमं सुखं नान्यत् ॥ १७० ॥
यद्द्रव्योपकरणभक्तपानदेहाधिकारकं शौचम् ।
तद्भवति भावशौचानुपरोधाद्यत्नतः कार्यम् ॥ १७१ ॥
पञ्चास्रवाद्विरमणं पञ्चेन्द्रियनिग्रहः कषायजयः ।
दण्डत्रयविरतिश्चेति संयमः सप्तदशभेदः ॥ १७२ ॥
बांधवधनेन्द्रियसुखत्यागात्त्यक्तभयविग्रहः साधुः ।
त्यक्तात्मा निर्ग्रन्थस्त्यक्ताहंकारममकारः ॥ १७३ ॥
अविसंवादनयोगः कायमनोवागजिह्मता चैव ।
सत्यं चतुर्विधं तच्च जिनवरमतेऽस्ति नान्यत्र ॥ १७४ ॥
अनशनमूनोदरता वृत्तेः संक्षेपणं रसत्यागः ।
कायक्लेशः संलीनतेति बाह्यं तपः प्रोक्तम् ॥ १७५ ॥
प्रायश्चित्तध्याने वैयावृत्यविनयावथोत्सर्गः[1] ।

---

१ H. विनयाम्नथोत्सर्गः.

स्वाध्याय इति तपः षट्प्रकारमभ्यन्तरं भवति ॥१७६॥
दिव्यात्कामरतिसुखात्त्रिविधेन विरतिरिति नवकं।
औदारिकादपि तथा तद्ब्रह्माष्टादशविकल्पम् ॥१७७॥
अध्यात्मविदो मूर्छां परिग्रहं वर्णयन्ति निश्चयतः।
तस्माद्वैराग्येप्सोराकिञ्चन्यं परो धर्मः ॥१७८॥
दशविधधर्मानुष्ठायिनः सदा रागद्वेषमोहानाम्।
दृढरूढघनानामपि भवत्युपशमो ऽल्पकालेन ॥१७९॥
ममकाराहंकारत्यागादतिदुर्जयोद्धतप्रबलान्।
हन्ति परीषहगौरवकषायदण्डेन्द्रियव्यूहान् ॥१८०॥
प्रवचनभक्तिः श्रुतसंपदुद्यमो व्यतिकरश्च संविग्नैः।
वैराग्यमार्गसद्भावभावधीस्थैर्यजनकानि ॥१८१॥

आक्षेपणिविक्षेपणि[१] विमार्गबाधनसमर्थविन्यासाम्।
श्रोतृजनश्रोत्रमनःप्रसादजननीं यथा जननीम्[२] ॥१८२॥
संवेदनीं[३] च निर्वेदनीं च धर्म्यां कथां सदा कुर्यात्।
स्त्रीभक्तचौरजनपदकथाश्च दूरात्परित्याज्याः ॥१८३॥
यावत्परगुणदोषपरिकीर्तने व्यापृतं मनो भवति।
तावद्वरं विशुद्धे ध्याने व्यग्रं मनः कर्तुम् ॥१८४॥
शास्त्राध्ययने चाध्यापने च संचिन्तने तथात्मनि च।
धर्मकथने च सततं यत्नः सर्वात्मना कार्यः ॥१८५॥

---

१ अत्र समाहारद्वंद्वः औणादिकोऽणिप्रत्ययः प्रत्यासत्यचत्या ख्या.

२ Var. H. अन्ये त्वनार्यार्था चत्वार्यपि पदानि प्रथमाविभक्त्यन्तानि व्याख्यान्ति

३ H. संवेजनीं.

शास्विति वाग्विधिविद्भिर्धातुः पापठ्यते ऽनुशिष्ट्यर्थः ।
त्रैङिति च पालनार्थे विनिश्चितः सर्वशब्दविदाम् ॥१८६॥
यस्माद्रागद्वेषोद्धतचित्तान्समनुशास्ति सद्धर्मे ।
संत्रायते च दुःखाच्छास्त्रमिति निरुच्यते सद्भिः ।१८७॥
शासनसामर्थ्येन तु संत्राणबलेन चानवद्येन ।
युक्तं यत्तच्छास्त्रं तच्चैतत्सर्वविद्वचनम् ॥१८८॥
जीवाजीवाः पुण्यं पापास्रवसंवराः सनिर्जरणाः ।
बन्धो मोक्षश्चैते सम्यक् चिन्त्या नवपदार्थाः ॥१८९॥
जीवा मुक्ताः संसारिणश्च संसारिणस्त्वनेकविधाः ।
लक्षणतो विज्ञेया द्विचितुःपञ्चषड्भेदाः ॥१९०॥
द्विविधाश्चराचराख्यास्त्रिविधाः स्त्रीपुंनपुंसका ज्ञेयाः ।
नारकतिर्यग्मानुषदेवाश्चतुर्विधाः प्रोक्ताः ॥१९१॥
पञ्चविधास्त्वेकद्विचितुःपञ्चेन्द्रियास्तु निर्दिष्टाः ।
क्षित्यम्बुवह्निपवनतरवस्त्रसाश्चेति[1] षड्भेदाः ॥१९२॥
एवमनेकविधानामेकैको विधिरनन्तपर्यायः ।
प्रोक्तः स्थित्यवगाहज्ञानदर्शनादिपर्यायैः ॥१९३॥
सामान्यं खलु लक्षणमुपयोगो भवति सर्वजीवानाम् ।
साकारो ऽनाकारश्च सो ऽष्टभेदश्चतुर्धा च ॥१९४॥
ज्ञानाज्ञाने पञ्चत्रिविकल्पे सो ऽष्टधा तु साकारः ।
चक्षुरचक्षुरवधिकेवलदृग्विषयस्त्वनाकारः ॥१९५॥
भावा भवन्ति जीवस्यौदयिकः पारिणामिकश्चैव ।

---

१ A omits इति.

औपशमिकः क्षयोत्थः क्षयोपशमजश्च पञ्चैते ॥१९६॥
ते चैकविंशतित्रिद्विनवाष्टादशविधाश्च विज्ञेयाः ।
षष्ठश्च सान्निपातिक इत्यन्यः पञ्चदशभेदः ॥१९७॥
एभिर्भावैः स्थानं गतिमिन्द्रियसंपदः[१] सुखं दुःखम् ।
संप्राप्नोतीत्यात्मा सो ऽष्टविकल्पः समासेन ॥१९८॥
द्रव्यं कषाययोगावुपयोगो ज्ञानदर्शने चेति[२] ।
चारित्रं वीर्यं चेत्यष्टविधा मार्गणा तस्य ॥१९९॥
जीवाजीवानां द्रव्यात्मा सकषायिणां कषायात्मा ।
योगः सयोगिनां पुनरुपयोगः सर्वजीवानाम् ॥२००॥
ज्ञानं सम्यग्दृष्टेर्दर्शनमथ भवति सर्वजीवानाम् ।
चारित्रं विरतानां तु सर्वसंसारिणां वीर्यम् ॥२०१॥
द्रव्यात्मेत्युपचारः सर्वद्रव्येषु नयविशेषेण ।
आत्मादेशादात्मा भवत्यनात्मा परादेशात् ॥२०२॥
एवं संयोगाल्पबहुत्वाद्यैर्नैकशः स परिमृग्यः ।
जीवस्यैतत्सर्वं स्वतत्त्वमिह लक्षणैर्दृष्टम् ॥२०३॥
उत्पादविगमनित्यत्वलक्षणं यत्तदस्ति सर्वमपि ।
सदसद्वा भवतीत्यन्यथार्पितानर्पितविशेषात् ॥२०४॥
यो ऽर्थो यस्मिन्नाभूत् साम्प्रतकाले च दृश्यते तत्र ।
तेनोत्पादस्तस्य विगमस्तु तस्माद्विपर्यासः ॥२०५॥
साम्प्रतकाले चानागते च यो यस्य भवति सम्बन्धी ।
तेनाविगमस्तस्येति स नित्यस्तेन भावेन ॥२०६॥

---

१ Var. A. संपद् . २ H. चैव .

धर्माधर्माकाशानि पुद्गलाः काल एव चाजीवाः ।
पुद्गलवर्जमरूपं तु रूपिणः पुद्गलाः प्रोक्ताः ॥२०७॥
द्व्यादिप्रदेशवन्तो यावदनन्तप्रदेशकाः[1] स्कन्धाः ।
परमाणुरप्रदेशो वर्णादिगुणेषु भजनीयः ॥२०८॥
भावे धर्माधर्माम्बरकालाः पारिणामिके ज्ञेयाः ।
उदयपरिणामि रूपं तु सर्वभावानुगा जीवाः ॥२०९॥
जीवाजीवा द्रव्यमिति षड्विधं भवति लोकपुरुषोऽयम् ।
वैशाखस्थानस्थः पुरुष इव कटिस्थकरयुग्मः ॥२१०॥
तत्राधोमुखमल्लकसंस्थानं वर्णयन्त्यधोलोकम् ।
स्थालमिव च तिर्यग्लोकमूर्ध्वमथ मल्लकसमुद्गम् ॥२११॥
सप्तविधोऽधोलोकस्तिर्यग्लोको भवत्यनेकविधः ।
पञ्चदशविधानः पुनरूर्ध्वलोकः समासेन ॥११२॥
लोकालोकव्यापकमाकाशं मर्त्यलौकिकः[2] कालः ।
लोकव्यापि चतुष्टयमवशेषं त्वेकजीवो वा ॥११३॥
धर्माधर्माकाशान्येकैकमतः परं त्रिकमनन्तम् ।
कालं विनास्तिकाया जीवमृते चाप्यकर्तॄणि ॥२१४॥
धर्मो गतिस्थितिमतां द्रव्याणां गत्युपग्रहविधाता ।
स्थित्युपकर्ताधर्मो[3]ऽवकाशदानोपकृद्गगनम् ॥२१५॥
स्पर्शरसगन्धवर्णाः शब्दो बन्धश्च[4] सूक्ष्मता स्थौल्यम् ।
संस्थानं भेदतमश्छायोद्योतातपश्चेति ॥२१६॥

---

१ H प्रदेशिकाः.
२ H मार्त्यलौकिकः.
३ A. स्थित्युपकाराधर्मा.
४ H बन्धोऽथ.

कर्मशरीरमनोवाग्विचेष्टितोच्छ्वासदुःखसुखदाः स्युः ।
जीवितमरणोपग्रहकराश्च संसारिणः स्कन्धाः ॥२१७॥
परिणामवर्तनाविधिपरापरत्वगुणलक्षणः कालः ।
सम्यक्त्वज्ञानचारित्रवीर्यशिक्षागुणा जीवाः ॥२१८॥
पुद्गलकर्म शुभं यत्तत्पुण्यमिति जिनशासने दृष्टम् ।
यदशुभमथ तत्पापमिति भवति सर्वज्ञनिर्दिष्टम् ॥२१९॥
योगः शुद्धः पुण्यास्रवस्तु पापस्य तद्विपर्यासः ।
वाक्कायमनोगुप्तिर्निरास्रवः संवरस्तूक्तः ॥२२०॥
संवृततपउपधानात्तु[1] निर्जरा कर्मसन्ततिर्बन्धः ।
बन्धवियोगो मोक्षस्त्विति संक्षेपान्नवपदार्थाः ॥२२१॥
एतेष्वध्यवसायो योऽर्थेषु विनिश्चयेन तत्त्वमिति ।
सम्यग्दर्शनमेतत्तु तन्निसर्गादधिगमाद्वा ॥२२२॥
शिक्षागमोपदेशश्रवणान्येकार्थिकान्यधिगमस्य ।
एकार्थः परिणामो भवति निसर्गः स्वभावश्च ॥२२३॥
एतत्सम्यग्दर्शनमनधिगमविपर्ययौ तु[2] मिथ्यात्वम् ।
ज्ञानमथ पञ्चभेदं तत्प्रत्यक्षं परोक्षं च ॥२२४॥
तत्र परोक्षं द्विविधं श्रुतमाभिनिबोधिकं च विज्ञेयम् ।
प्रत्यक्षं त्ववधिमनःपर्यायौ केवलं चेति ॥२२५॥
एषामुत्तरभेदविषयादिभिर्भवति विस्तराधिगमः ।
एकादीन्येकस्मिन् भाज्यानि त्वा चतुर्भ्य इति ॥२२६॥
सम्यग्दृष्टेर्ज्ञानं सम्यग्ज्ञानमिति नियमतः सिद्धम् ।

---

1. Var H. तप उपधानं तु.
2. H. तुशब्दात् संशयश्च.

आद्यत्रयमज्ञानमपि भवति मिथ्यात्वसंयुक्तम् ॥२२७॥

सामायिकमित्याद्यं छेदोपस्थापनं द्वितीयं तु ।
परिहारविशुद्धिः सूक्ष्मसंपरायं यथाख्यातम् ॥२२८॥

इत्येतत्पञ्चविधं चारित्रं मोक्षसाधनं प्रवरम्[1] ।
नैकैरनुयोगनयप्रमाणमार्गैः समनुगम्यम् ॥२२९॥

सम्यक्त्वज्ञानचारित्रसंपदः साधनानि मोक्षस्य ।
तास्वेकतराभावे ऽपि मोक्षमार्गो ऽप्यसिद्धिकरः ॥२३०॥

पूर्वद्वयसंपद्यपि तेषां भजनीयमुत्तरं भवति ।
पूर्वद्वयलाभः पुनरुत्तरलाभे भवति सिद्धः ॥२३१॥

धर्मावश्यकयोगेषु भावितात्मा प्रमादपरिवर्जी ।
सम्यक्त्वज्ञानचारित्राणामाराधको भवति ॥२३२॥

आराधनास्तु तेषां तिस्रस्तु जघन्यमध्यमोत्कृष्टाः ।
जन्मभिरष्टत्र्येकैः सिध्यन्त्याराधकास्तासाम् ॥२३३॥

तासामाराधनतत्परेण तेष्वेव भवति यतितव्यम् ।
यतिना तत्परजिनभक्त्युपग्रहसमाधिकरणेन ॥२३४॥

स्वगुणाभ्यासरतमतेः परवृत्तान्तान्धमूकबधिरस्य ।
मदमदनमोहमत्सररोषविषादैरधृष्यस्य ॥२३५॥

प्रशमाव्याबाधसुखाभिकांक्षिणः सुस्थितस्य सद्धर्मे ।
तस्य किमौपम्यं स्यात् सदेवमनुजे ऽपि लोके ऽस्मिन् ॥२३६॥

स्वर्गसुखानि परोक्षाण्यत्यन्तपरोक्षमेव मोक्षसुखम् ।
प्रत्यक्षं प्रशमसुखं न परवशं च न व्ययप्राप्तम् ॥२३७॥

---

१ A परमं.

निर्जितमदमदनानां वाक्कायमनोविकाररहितानाम् ।
विनिवृत्तपराशानामिहैव मोक्षः सुविहितानाम् ॥२३८॥
शब्दादिविषयपरिणाममनित्यं दुःखमेव च ज्ञात्वा ।
ज्ञात्वा च रागदोषात्मकानि दुःखानि संसारे ॥२३९॥
स्वशरीरेऽपि न रज्यति शत्रावपि न प्रदोषमुपयाति ।
रोगजरामरणभयैरव्यथितो यः स नित्यसुखी ॥२४०॥
धर्मध्यानाभिरतस्त्रिदण्डविरतस्त्रिगुप्तिगुप्तात्मा ।
सुखमास्ते निर्द्वन्द्वो जितेन्द्रियपरीषहकषायः ॥२४१॥
विषयसुखनिरभिलाषः प्रशमगुणगणाभ्यलंकृतः साधुः ।
द्योतयति यथा न तथा सर्वाण्यादित्यतेजांसि[1] ॥२४२॥
[2](सम्यग्दृष्टिर्ज्ञानी विरतितपोबलयुतोऽप्यनुपशान्तः ।
तं न लभते गुणं यं प्रशमगुणमुपाश्रितो लभते)[2] ॥
सम्यग्दृष्टिर्ज्ञानी विरतितपोध्यानभावनायोगैः ।
शीलाङ्गसहस्राष्टादशकमयत्नेन साधयति ॥२४३॥
धर्माद्भूम्यादीन्द्रियसंज्ञाभ्यः करणतश्च योगाच्च ।
शीलाङ्गसहस्राणामष्टादशकस्य निष्पत्तिः ॥२४४॥
शीलार्णवस्य पारं गत्वा संविग्नसुगममार्गस्य[3] ।
धर्मध्यानमुपगतो वैराग्यं प्राप्नुयाद्योग्यम् ॥२४५॥
आज्ञाविचयमपायविचयं च सद्ध्यानयोगमुपसृत्य ।
तस्माद्विपाकविचयमुपयाति संस्थानविचयं च ॥२४६॥

१ A. द्योतयति यथा सर्वाण्यादित्यः सर्वतेजांसि.

२ A. adds this verse and cf. 127. ३ Var. H. पारस्य.

आप्तवचनं प्रवचनं चाज्ञा विचयस्त[1]दर्थनिर्णयनम् ।
आस्रवविकथागौरवपरीषहाद्यैरपायस्तु[2] ॥२४७॥
अशुभशुभकर्मपाकानुचिन्तनार्थो विपाकविचयः स्यात् ।
द्रव्यक्षेत्राकृत्यनुगमनं संस्थानविचयस्तु ॥२४८॥
जिनवरवचनगुणगणं संचिन्तयतो वधाद्यपायांश्च ।
कर्मविपाकान् विविधान् संस्थानविधीननेकांश्च ॥२४९॥
नित्योद्विग्नस्यैवं क्षमाप्रधानस्य निरभिमानस्य ।
धुतमायाकलम[3]लनिर्मलस्य जितसर्वतृष्णस्य ॥२५०॥
तुल्यारण्यकुलाकुलविविक्तबन्धुजनशत्रुवर्गस्य ।
समवासीचन्दनकल्पनप्रदेहादिदेहस्य ॥२५१॥
आत्मारामस्य सतः समतृणमणिमुक्तालेष्टुकनकस्य ।
स्वाध्यायध्यानपरायणस्य दृढमप्रमत्तस्य ॥२५२॥
अध्यवसायविशुद्धेः प्रशस्त[4]योगैर्विशुध्यमानस्य ।
चारित्रशुद्धिमग्र्यामवाप्य लेश्याविशुद्धिं च ॥२५३॥
तस्यापूर्वकरणमथ घातिकर्मक्षयैकदेशोत्थम् ।
ऋद्धिप्रवेकविभववदुपजातं जातभद्रस्य ॥२५४॥
सातर्द्धिरसेष्वगुरुः प्राप्य[5]र्द्धिविभूतिमसुलभामन्यैः ।
सक्तः प्रशमरतिसुखे न भजति तस्यां मुनिः सङ्गम् ॥२५५॥
या सर्वसुरवरर्द्धिर्विस्मयनीयापि सानगारर्द्धेः ।
नार्हति सहस्रभागं कोटिशतसहस्रगुणितापि ॥२५६॥

---

१ A. त्वाज्ञाभिजयः. २ A. परीषहादैरपायस्तु. ३ A. कलिमल.
४ A. प्रमश ५ A. संप्राप्य.

तज्जयमवाप्य जितविघ्नरिपुर्भवशतसहस्रदुःप्रापम् ।
चारित्रमयाख्यातं संप्राप्तस्तीर्थकृत्तुल्यम् ॥२५७॥
शुक्लध्यानाद्यद्वयमवाप्य कर्माष्टकप्रणेतारम् ।
संसारमूलबीजं मूलादुन्मूलयति मोहम् ॥२५८॥
पूर्वं करोत्यनन्तानुबन्धिनाम्नां क्षयं कषायाणाम् ।
मिथ्यात्वमोहगहनं क्षपयति सम्यक्त्वमिथ्यात्वम् ॥२५९॥
सम्यक्त्वमोहनीयं क्षपयत्यष्टावतः कषायांश्च ।
क्षपयति ततो नपुंसकवेदं स्त्रीवेदमथ तस्मात् ॥२६०॥
हास्यादि ततः षट्कं क्षपयति तस्माच्च पुरुषवेदमपि ।
संज्वलनानपि हत्वा प्राप्नोत्यथ वीतरागत्वम् ॥२६१॥
सर्वोद्घाततिमोहो निहतक्लेशो यथा हि सर्वज्ञः ।
भात्यनुपलक्ष्यराह्वंशोन्मुक्तः पूर्णचन्द्र इव ॥२६२॥
सर्वेन्धनैकराशीकृतसंदीप्तो ह्यनन्तगुणतेजाः ।
ध्यानानलस्तपःप्रशमसंवरहविर्विवृद्धबलः ॥२६३॥
क्षपकश्रेणिपरिगतः[1] स समर्थः सर्वकर्मिणां कर्म ।
क्षपयितुमेको यदि कर्मसंक्रमः स्यात्परकृतस्य ॥२६४॥
परकृतकर्मणि यस्मान्नाक्रामति संक्रमो विभागो वा ।
तस्मात्सत्त्वानां कर्म यस्य यत्तेन तद्वेद्यम् ॥२६५॥
मस्तकसूचिविनाशात्तालस्य यथा ध्रुवो भवति नाशः ।
तद्वत्कर्मविनाशो हि मोहनीयक्षये नित्यम् ॥२६६॥
छद्मस्थवीतरागः कालं सो ऽन्तर्मुहूर्तमथ भूत्वा ।

1 A. श्रेणिमुपगतः.

युगपद्विविधावरणान्तरायकर्मक्षयमवाप्य ॥२६७॥
शाश्वतमनन्तमनतिशयमनुपममनुत्तरं निरवशेषम् ।
संपूर्णमप्रतिहतं संप्राप्तः केवलं ज्ञानम् ॥२६८॥
कृत्स्ने[1] लोकालोके व्यतीतसाम्प्रतभविष्यतः कालात्[2] ।
द्रव्यगुणपर्यायाणां ज्ञाता द्रष्टा च सर्वार्थैः ॥२६९॥
क्षीणचतुःकर्मांशो वेद्यायुर्नामगोत्रवेदयिता ।
विहरति मुहूर्तकालं देशोनां पूर्वकोटिं वा ॥२७०॥
तेनाभिन्नं चरमभवायुर्दुर्भेदमनपवर्तित्वात् ।
तदुपग्रहं च वेद्यं तत्तुल्ये नामगोत्रे च ॥२७१॥

यस्य पुनः केवलिनः कर्म भवत्यायुषो ऽतिरिक्ततरम् ।
स समुद्घातं भगवानथ गच्छति तत्समीकर्तुम् ॥२७२॥
दण्डं प्रथमे समये कपाटमथ चोत्तरे तथा समये ।
मन्थानमथ तृतीये लोकव्यापि चतुर्थे तु ॥२७३॥
संहरति पञ्चमे त्वन्तराणि मन्थानमथ पुनः षष्ठे ।
सप्तमके तु कपाटं संहरति ततो ऽष्टमे दण्डम् ॥२७४॥
औदारिकप्रयोक्ता प्रथमाष्टमसमययोरसाविष्टः ।
मिश्रौदारिकयोक्ता सप्तमषष्ठद्वितीयेषु ॥२७५॥
कार्मणशरीरयोगी चतुर्थके पञ्चके तृतीये च ।
समयत्रये ऽपि तस्मिन भवत्यनाहारको नियमात् ॥२७६॥

स समुद्घातनिवृत्तो ऽथ[3] मनोवाक्काययोगवान् भगवान् ।

1 A कात्स्न्यालोकालोके   2 A कालान

3 B स्थानन्तर

यतियोग्ययोगयोक्ता[1] योगनिरोधं मुनिरुपैति ॥२७७॥
पञ्चेन्द्रियो ऽथ संज्ञी यः पर्याप्तो जघन्ययोगी स्यात् ।
निरुणद्धि मनोयोगं ततो ऽप्यसंख्येयगुणहीनम् ॥२७८॥
द्वीन्द्रियसाधारणयोर्वागुच्छ्वासावधो जयति तद्वत् ।
पनकस्य काययोगं जघन्यपर्याप्तकस्याधः ॥२७९॥
सूक्ष्मक्रियमप्रतिपाति काययोगोपगस्ततो ध्यात्वा[2] ।
विगतक्रियमनिवर्तित्वमुत्तरं ध्यायति परेण ॥२८०॥
चरमभवे संस्थानं यादृग्यस्योच्छ्रयप्रमाणं च ।
तस्मात् त्रिभागहीनावगाहसंस्थानपरिणाहः ॥२८१॥
सो ऽथ मनोवागुच्छ्वासकाययोगक्रियार्थविनिवृत्तः ।
अपरिमितनिर्जरात्मा संसारमहार्णवोत्तीर्णः ॥२८२॥
ईषद्ध्रस्वाक्षरपञ्चकोद्गिरणमात्रतुल्यकालीयाम् ।
संयमवीर्याप्तबलः शैलेशीमेति गतलेश्यः ॥२८३॥
पूर्वरचितं च तस्यां समयश्रेण्यामथ प्रकृतिशेषम् ।
समये समये क्षपयत्यसंख्यगुणमुत्तरोत्तरतः ॥२८४॥
चरमे समये सङ्ख्यातीतान्विनिहत्य[3] चरमकर्मांशान् ।
क्षपयति युगपत् कृत्स्नं वेद्यायुर्नामगोत्रगणम् ॥२८५॥
सर्वगतियोग्यसंसारमूलकरणानि सर्वभावानि[4] ।
औदारिकतैजसकार्मणानि सर्वात्मना त्यक्त्वा ॥२८६॥
देहत्रयनिर्मुक्तः प्राप्यर्जुश्रेणिवीतिमस्पर्शाम् ।

---

१ H. युक्ता.
२ A. यागोपयोगतो ध्यात्वा
३ H. विनिहन्ति
४ Var. H. सर्वभावीनि.

समयेनैकेनाविग्रहेण गत्वोर्ध्वगतिमप्रतिघः ॥२८७॥
सिद्धिक्षेत्रे विमले जन्मजरामरणरोगनिर्मुक्तः ।
लोकाग्रगतः सिध्यति साकारेणोपयोगेन ॥२८८॥
सादिकमनन्तमनुपममव्याबाधसुखमुत्तमं प्राप्तः ।
केवलसम्यक्त्वज्ञानदर्शनात्मा भवति मुक्तः ॥२८९॥
मुक्तः सन्नाभावः स्वालक्षण्यात्स्वतोऽर्थसिद्धेश्च ।
भावान्तरसंक्रान्तेः सर्वज्ञाज्ञोपदेशाच्च ॥२९०॥
त्यक्त्वा शरीरबन्धनमिहैव कर्माष्टकक्षयं कृत्वा ।
न स तिष्ठत्यनिबन्धा[1]दनाश्रयादप्रयोगाच्च ॥२९१॥
नाधो गौरवविगमादशक्यभावाच्च गच्छति विमुक्तः ।
लोकान्तादपि न परं प्लवक इवोपग्रहाभावात् ॥२९२॥
योगप्रयोगयोश्चाभावात्तिर्यग् न तस्य गतिरस्ति ।
सिद्धस्योर्ध्वं मुक्तस्यालोकान्ताद्गतिर्भवति ॥२९३॥
पूर्वप्रयोगसिद्धेर्बन्धच्छेदादसङ्गभावाच्च ।
गतिपरिणामाच्च तथा सिद्धस्योर्ध्वं गतिः सिद्धा ॥२९४॥
देहमनोवृत्तिभ्यां भवतः शरीरमानसे दुःखे ।
तदभावस्तदभावे सिद्धं सिद्धस्य सिद्धिसुखम् ॥२९५॥
यस्तु यतिर्घटमानः सम्यक्त्वज्ञानशीलसंपन्नः ।
वीर्यमनिगूहमानः शक्त्यनुरूपं प्रयत्नेन[2] ॥२९६॥
संहननायुर्बलकालवीर्यसंपत्समाधिवैकल्यात्
कर्मातिगौरवाद्वा स्वार्थमकृत्वोपरममेति ॥२९७॥

---

१ A. अनुबन्धात्. २ A. असक्त. ३ A. अनुरूपप्रयत्नेन.

सौधर्मादिष्वन्यतमकेषु सर्वार्थसिद्धिचरमेषु ।
स भवति देवो वैमानिको महर्द्धिद्युतिवपुष्कः ॥२९८॥
तत्र सुरलोकसौख्यं चिरमनुभूय स्थितिक्षयात्तस्मात् ।
पुनरपि मनुष्यलोके गुणवत्सु मनुष्यसङ्घेषु ॥२९९॥
जन्म समवाप्य कुलबन्धुविभवरूपबलबुद्धिसंपन्नः ।
श्रद्धासम्यक्त्वज्ञानसंवरतपोबलसमग्रः ॥३००॥
पूर्वोक्तभावनाभावितान्तरात्मा विधूतसंसारः ।
सेत्स्यति ततः परं वा स्वर्गान्तरितस्त्रिभवभावात् ॥३०१॥

यश्चेह जिनवरमते गृहाश्रमी निश्चितः सुविदितार्थः ।
दर्शनशीलव्रतभावनाभिरभिरञ्जितमनस्कः ॥३०२॥
स्थूलवधानृतचौर्यपरस्त्रीरत्यरतिवर्जितः सततम् ।
दिग्व्रतमूर्ध्वं देशावकाशिकमनर्थविरतिं च ॥३०३॥
सामायिकं च कृत्वा पौषधमुपभोगपारिमाण्यं* च ।
न्यायागतं च कल्प्यं विधिव[1]त्पात्रेषु विनियोज्यम् ॥३०४॥
चैत्यायतनप्रस्थापनानि च कृत्वा[2] शक्तितः प्रयतः ।
पूजाश्च गन्धमाल्याधिवासधूपप्रदीपाद्याः ॥३०५॥
प्रशमरतिनित्यतृषितो जिनगुरुसाधुजनवन्दनाभिरतः ।
संलेखनां च काले योगेनाराध्य सुविशुद्धाम् ॥३०६॥
प्राप्तः कल्पेष्विन्द्रत्वं वा सामानिकत्वमन्यद्वा ।
स्थानमुदारं तत्रानुभूय च सुखं तदनुरूपम् ॥३०७॥
नरलोकमेत्य सर्वगुणसंपदं दुर्लभां पुनर्लब्ध्वा ।

---

[1] H. adds च. * A. परिमाणं. [2] A. विधिना

शुद्धः स सिद्धिमेष्यति भवाष्टकाभ्यन्तरे नियमात् ॥३०८॥
इत्येवं प्रशमरतेः फलमिह स्वर्गापवर्गयोश्च शुभम् ।
संप्राप्यते ऽनगारैरगारिभिश्चोत्तरगुणाढ्यैः ॥३०९॥
जिनशासनार्णवादाकृष्टां धर्मकथिकामिमां श्रुत्वा ।
रत्नाकरादिव जरत्कपर्दिकामुद्धृतां भक्त्या ॥३१०॥
सद्भिर्गुणदोषज्ञैर्दोषानुत्सृज्य गुणलवा ग्राह्याः ।
सर्वात्मना च सततं प्रशमसुखायैव यतितव्यम् ॥३११॥
यच्चासमंजसमिह च्छन्दःशब्दसमयार्थतो ऽभिहितम् ।
पुत्रापराधवन्मम मर्षयितव्यं बुधैः सर्वम् ॥३१२॥
सर्वसुखमूलबीजं सर्वार्थविनिश्चयप्रकाशकरम् ।
सर्वगुणसिद्धिसाधनधनमर्हच्छासनं जयति ॥३१३॥

॥ प्रशमरतिप्रकरणं समाप्तमिति ॥



Peterson's First Report Appendix I. P. 15.
Contrast Third Report, P. 48

2) प्रशमरतिप्रकरणम् Ends—

धर्मकथिका प्रममरतिरार्याशतत्रयं द्वादशोत्तरं परिसमाप्तमिति । प्रसमरतिप्रकरणं समाप्तमिति ॥ मंगलं ॥

A begins—

प्रशमस्थेन येनेयं कृता वैराग्यपद्धतिः ॥
तस्मै वाचकमुख्याय नमो भूतार्थभाषिणे ॥१॥

प्रशमरतिप्रकरणारंभे मंगलाभिधानं विवक्षितप्रकरणार्थस्या-प्रत्यूहेन परिसमाप्त्यर्थमित्याह च नाभेयाद्याः ॥

H. begins— ॥ श्री प्रवचनाय ॥

उदयस्थितमरुणकरं दिनकरमिव केवलालोकम् ।
विनिहतजडतादोषं सद्वृत्तं वीरमानम्य ॥
वक्ष्यामि प्रशमरतेर्विवरणमिह वृत्तितः किंचित् ।
जडमतिरप्यकठोरं स्वस्मृत्यर्थं यथाबोधम् ॥
यद्यपि मदीयवृत्तेः साफल्यं नास्ति तादृशं किमपि ।
सुगमत्वलघुत्वाभ्यां तथापि तत्संभवत्येव ॥

इहाचार्यः श्रीमानुमास्वातिपुत्रस्वामितकुतर्कजनितवितर्कसंपर्कप्रपञ्चः पञ्चशतप्रकरणप्रबन्धप्रणेता वाचकमुख्यः समस्तश्वेताम्बरकुलतिलकः प्रशमरतिप्रकरणकरणे प्रवर्तमानः प्रथमत एव मङ्गलादिप्रतिपादकमिदमार्याद्वितयमुपन्यस्तवान् ॥ नाभेयाद्याः &c And ends. यतः ।

यत्यालये मन्दगुरूपशोभे सन्मङ्गले सद्बुधराजहंसे ।
तारापथे वा सुकविप्रचारे श्रीमानदेवाभिधसूरिगच्छे ॥१॥
भव्या बभूवुः शुभसत्त्व शिष्या अध्यापकाः श्रीजिनदेवसंज्ञाः ।
तेषां विनेयैर्बहुभक्तियुक्तैः प्रज्ञाविहीनैरपि शास्त्ररागात् ॥२॥
श्रीहरिभद्राचार्यै रचितं प्रशमरतिविवरणं किंचित् ।
परिभाव्य वृद्धटीकाः सुखबोधार्थं समासेन ॥३॥
अणहिलपाटकनगरे श्रीमज्जयसिंहदेवनृपराज्ये ।
बाणवसुरुद्र (1185) संख्ये विक्रमतो वत्सरे व्रजति ॥४॥

श्रीधवलभाण्डशालिकपुत्रयशोनागनायकवितीर्णे ।
सदुपाश्रये स्थितैस्तैः समर्थितं शोधितं चेति ॥५॥

यदिहाशुद्धं किंचिच्छद्मस्थत्वेन लिखितमस्माभिः ।
तच्छोध्यं धीमद्भिः सम्यक् संचिन्त्य समयज्ञैः ॥६॥

शास्त्रस्य पीठबन्धः कषायरागादिकर्मकरणार्थाः ।
अष्टौ च मदस्थानान्याचारो भावना धर्मः ॥७॥

तदनुकथा जीवाद्या उपयोगा भावषड्विधद्रव्यम् ।
चरणं शीलांगानि च ध्यानश्रेणीसमुद्घाताः ॥८॥

योगनिरोधः क्रमशः शिवगमनविधानमन्तफलमस्याः ।
द्वाविंशत्यधिकारा मुख्या इह धर्मकथिकायाम् ॥९॥

व्याख्याने तस्य शास्त्रस्य कृत्वा पुण्यं यदर्जितम् ।
तेन भव्यो जनः सर्वो लभतां शममुत्तमम् ॥१०॥

धात्री धात्रीधरा यावद्यावच्चन्द्रदिवाकरौ ।
तावदज्ञानविध्वंसान्नन्द्यादेषा सुवृत्तिका ॥११॥

ग्रन्थाग्रमत्र जातं प्रत्यक्षरगणनतः ससूत्रायाः ।
सद्वृत्तेरष्टादश शतानि सच्छ्लोकमानेन ॥१२॥

॥ ग्रन्थाग्रमङ्कतः १८०० ॥

॥ इति श्रीबृहद्गच्छीयश्रीहरिभद्रसूरिविरचिता प्रशमरतिवृत्तिः समाप्ता ॥